मांवेति उरुविक्रमंमहाविक्रमम् वैप्रसिद्धौ ६४ परमेति प्राप्स्यसइति छांदसस्तङ् मत्परिग्रहात् मदाश्रयात् समालोच्यविचार्यमत्परिग्रहतांमत्पत्नीत्वं
६५ ऋषिरुवाच इत्युक्तेति अंतस्मितत्वेनसावहेलमुत्तरंसूचितम् ६६ देव्युवाच सत्यमिति अत्रशुंभविषयेत्रैलोक्याधिपतिरितिसमत्वं ६७
किंत्विति अत्रपरिग्रहविषये अल्पबुद्धित्वादितिसंभवायप्रतिज्ञाहानौचमहादोषः पापंचपुरुषपरिग्रहे ६८ प्रतिज्ञातमाह योमामिति जयति संग्रामाति



मांवाममानुजंवापिनिशुंभमुरुविक्रमम् भजत्वंचपलापांगीरत्नभूतासिवैयतः ६४ परमैश्वर्यमतुलंप्राप्स्यसेमत्परिग्रहात् एतद्बुध्वासमालोच्यमत्परिग्रहतांव्रज ६५ ऋषिरुवाच इत्युक्तासातदादेवीगंभीरांतःस्मिताजगौ दुर्गाभगवती भद्राययेदंधार्यतेजगत् ६६ देव्युवाच सत्यमुक्तंत्वयानात्रमिथ्याकिंचित्त्वयोदितम् त्रैलोक्याधिपतिःशुंभोनिशुंभश्चापितादृशः ६७ किंत्वत्रयत्प्रतिज्ञातंमिथ्यातत्क्रियतेकथम् श्रूयतामल्पबुद्धित्वात्प्रतिज्ञायाकृतापुरा ६८ योमांजयतिसंग्रामेयोमेदर्पंव्यपोहति योमेप्रतिबलोलोकेसमेभर्ताभविष्यति ६९ तदागच्छतुशुंभोत्रनिशुंभोवामहासुरः मांजित्वाकिंचिरेणात्रपाणिंगृह्णातुमेलघु ७०

रित्केनापिप्रकारेणसंग्रामेयोमेदर्पंबलत्वाभिमानंव्यपोहति यश्चमेप्रतिबलः समानबलः पूर्वपूर्वाभावेउत्तरः तादृशश्चतत्त्वज्ञएवेतिगूढ
आशयः ६९ तदिति पाणिग्रहणात्पूर्वंममगमनमनुचितमितिभावः ७० ७ ७ ७ ७ ७

दूतउवाच अवलिप्तेति अवलेपोगर्वः एवंप्रागुक्तं यदग्रेपुमान् अपिनतिष्ठेत् तदग्रेस्त्रीनतिष्ठेद्देवेतिभावः ७१ नन्वहंदेवीत्यतः स्थास्यामीत्यतआह
अन्येषामपीतिद्वाभ्याम् एकिकेति कुत्सायांअसकृत् ७२ ७३ उपसंहरति सात्वमिति मयैवेत्यनेनागमनेनतेषांसर्वेषांदुष्टतयागौरवंनतिष्ठेदि
त्यर्थः तदेवविपक्षेबाधकमाह केशाकर्षणेननिर्धूतंखंडितंगौरवंयस्यास्तादृशीमागमिष्यसि अडित् मानजोर्थः सकाकुप्रश्न ७४ देव्युवाच

दूतउवाच अवलिप्तासिमैवंत्वंदेविब्रूहिममाग्रतः त्रैलोक्येकःपुमांस्तिष्ठेदग्रेशुंभनिशुंभयोः ७१ अन्येषामपिदैत्या
नांसर्वेदेवानवैयुधि तिष्ठंतिसंमुखेदेविकिंपुनःस्त्रीत्वमेकिका ७२ इंद्राद्याःसकलादेवास्तस्थुर्येषांनसंयुगे शुंभादी
नांकथंतेषांस्त्रीप्रयास्यसिसंमुखम् ७३ सात्वंगच्छमयैवोक्तापार्श्वंशुंभनिशुंभयोः केशाकर्षणनिर्धूतगौरवामागमि-
ष्यसि ७४ देव्युवाच एवमेतद्बलीशुंभोनिशुंभश्चातिवीर्यवान् किंकरोमिप्रतिज्ञामेयदनालोचितापुरा ७५ सत्वं
गच्छमयैवोक्तंयदेतत्सर्वमादृतः तदाचक्ष्वासुरेंद्रायसचयुक्तंकरोतुतत् ७६ इतिश्रीमार्कंडेयपुराणे० देवीमाहात्म्ये
देवीदूतसंवादे पंचमोऽध्यायः ५

एवमेतदिति सोपहासंयत्यतः प्रतिज्ञेत्यस्यकृतेतिशेषः ७५ सत्वमिति मयायदेतदुक्तंतत्सर्वमादृतःसन्नृतस्मै आचक्ष्वसःयुक्तंतत्करोतुचेत्य
न्वयः आदृतइत्यनेनन्यूनानतिरिक्तंवदेतिसूच्यते ७६ इतिशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतेसप्तशतीव्याख्यानेपंचमोऽध्यायः ५ ७९

ऋषिरुवाच इतीति अमर्षः कोपः समाचष्टउक्तवान् १ तस्येति दैत्यानामधिपंसेनापतिम् २ हेइति दुष्टांदुर्वचनाम् विव्हलामाकुलाम् ३ ४ ऋ-
षिरुवाच तेनेति सहस्त्राणामसुराणांषष्ठ्यावृतइत्यन्वयः ५ सदृष्ट्वेति तुहिनं हिमम् मूलंसमीपम् ६ विपक्षेबाधकमाह नचेदिति तर्हीत्यर्थः



ऋषिरुवाच इत्याकर्ण्यवचोदेव्याःसदूतोऽमर्षपूरितः समाचष्टसमागम्यदैत्यराजायविस्तरात् १ तस्यदूतस्यतद्वाक्य
माकर्ण्यासुरराट्ततः सक्रोधःप्राहदैत्यानामधिपंधूम्रलोचनम् २ हेधूम्रलोचनाशुत्वंस्वसैन्यपरिवारितः तामानयब
लाद्दुष्टांकेशाकर्षणविव्हलाम् ३ तत्परित्राणदःकश्चिद्यदिवोत्तिष्ठतेपरः सहंतव्योऽमरोवापियक्षोगंधर्वएववा ४
ऋषिरुवाच तेनाज्ञप्तस्ततःशीघ्रंसदैत्योधूम्रलोचनः वृतःषष्ट्यासहस्त्राणामसुराणांद्रुतंययौ ५ सदृष्ट्वातांततोदेवीं
तुहिनाचलसंस्थिताम् जगादोच्चैःप्रयाहीतिमूलंशुंभनिशुंभयोः ६ नचेत्प्रीत्याद्यभवतीमद्भर्तारमुपैष्यसि ततोबला
न्नयाम्यद्यकेशाकर्षणविव्हलाम् ७ देव्युवाच दैत्येश्वरेणप्रहितोबलवान्बलसंवृतः बलान्नयसिमामेवंततःकिं
तेकरोम्यहम् ८ ऋषिरुवाच इत्युक्तःसोऽभ्यधावत्तामसुरोधूम्रलोचनः हुंकारेणैवतंभस्मसाचकारांबिकाततः ९

७ देव्युवाच दैत्येश्वरेणेति एवंकेशाकर्षणविव्हलाम् बलात्सामर्थ्यसत्ता अवशतात्च सावष्टंभोक्तिरेषा ८ ऋषिरुवाच
इतीति तंसाभस्मचकारित्यन्वयः ९ ๛ ๛ ๛ ๛ ๛ ๛ ๛ ๛

अथेति अंबिकाकर्त्री अतएवतथास्वारस्यम् १० निर्नायकसैन्येदेव्याः प्रयासोव्यर्थइतिमत्वासिंहोयुयुधे ननइति तत्रहेतुगर्भविशेषणम् स्ववाहनइ
ति अर्धर्च्यादित्वात्पुंस्त्वं स्वीयवाहनइत्यर्थः पपातप्राविशत् ११ कांश्चिदिति ससिंहः आक्रांतिराक्रमणंतेनच अधरेण अधरकायेनाधरोष्ठेनच अन्या

अथक्रुद्धंमहासैन्यमसुराणांतथांबिका ववर्षसायकैस्तीक्ष्णैस्तथाशक्तिपरश्वधैः १० ततोधुतसटःकोपात्कृत्वानादंसुभैरवम् पपातासुरसेनायांसिंहोदेव्याःस्ववाहनः ११ कांश्चित्करप्रहारेणदैत्यानास्येनचापरान् आक्रांत्याचाधरेणान्यान्जघानसमहासुरान् १२ केषांचित्पाटयामासनखैःकोष्ठानिकेसरी तथातलप्रहारेणशिरांसिकृतवान्पृथक् १३ विच्छिन्नबाहुशिरसःकृतास्तेनतथापरे पपौचरुधिरंकोष्ठादन्येषांधुतकेसरः १४ क्षणेनतद्बलंसर्वंक्षयंनीतंमहात्मना तेन केसरिणादेव्यावाहनेनातिकोपिना १५ श्रुत्वातमसुरंदेव्यानिहतंधूम्रलोचनम् बलंचक्षयितंकृत्स्नंदेवीकेसरिणाततः १६ चुकोपदैत्याधिपतिःशुंभःप्रस्फुरिताधरः आज्ञापयामासचतौचंडमुंडौमहासुरौ १७ हेचंडहेमुंडबलैर्बहुलैःपरिवारितौ तत्रगच्छतगत्वाचसासमानीयतांलघु १८

न्महासुरान्दैत्यान्जघानेत्यन्वयः १२ केषामिति कोष्ठानितु
उदरमध्यानितनोविस्तृतांगुलिःपाणिः १३ १४ १५ श्रुत्वेति क्षयितमिति क्षयशब्दात्तारव्यानस नंतान्क्तः कृतक्षयमिति
१६ तौपूर्वौ १७ हेचंडेति बहुलैर्बहुभिरित्यर्थः गच्छत गच्छतं छंदोनुरोधाद्बिंदुलोपः लघुशीघ्रम् १८ ❀ ❀ ❀

आनयने प्रकारद्वयमाह केशेष्विति आकर्षणमात्रादनागमने बंधनं च इति गौरवाद्बहुवचनम् तृतीया सह युधि युद्धे प्रसक्ते यदि तथानयने संदेह स्तदा सर्वैर्दैत्यैः सकलायुधैः साविशेषेण निहन्यतां मार्यतामित्यर्थः १९ उपसंहरति आगम्यतामित्यं तेन सर्वथा गृहीतुमशक्या चेदेवं हंतव्या नान्यथेत्याह बध्वेति अथेति पक्षांतरे यदाशक्यते न र्हि बध्वा तां गृहीत्वै वागंतव्यमित्यर्थः २० इति शिवभट्टकृ॰ सप्तशतीव्याख्याने षष्ठोऽध्यायः ६ ऋषिरुवाच आज्ञसाइति

केशेष्वाकृष्य बध्वावायदि वः संशयो युधि तदाशेषायुधैः सर्वैरसुरैर्विनिहन्यताम् १९ तस्यां हतायां दुष्टायां सिंहे च विनिपातिते शीघ्रमागम्यतां बध्वा गृहीत्वा तामथांबिकाम् २० इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे॰ धूम्रलोचनवधो नाम षष्ठोऽध्यायः ६ ऋषिरुवाच आज्ञसास्ततो दैत्याश्चंडमुंडपुरोगमाः चतुरंगबलोपेता ययुरभ्युद्यतायुधाः १ ददृशुस्ते ततो देवीमीषद्धासां व्यवस्थिताम् सिंहस्योपरि शैलेंद्रशृंगे महति कांचने २ ते दृष्ट्वा तां समादातुमुद्यमं चक्रुरुद्यताः आकृष्टचापासिधरास्तथान्ये तत्समीपगाः ३ ततः कोपं चकारोच्चैरंबिका तानरीन्प्रति कोपेन चास्या वदनं मषीवर्णमभूत्तदा ४

शैलेंद्रशृंगे हिमाचलशृंगे सिंहस्योपरीति स्थितामित्यन्वयः १ २ ते इति चंडादयः समप्रधानाः समादातुं गृहीतुं उद्यमं उद्योगं उद्यताः उत्साहवंतः आकृष्टं आकर्णांत कृष्टं चापं यैस्ते कोशे धृतासयश्च तत्समीपगाः गृहीतुमुद्यतानां रक्षणार्थं समीपगा इत्यर्थः ३ अनेन चंडादीनामितितामसत्वं सूचितम् अतस्तद्वधार्थं तामसीप्रादुर्भावमाह तत इति मषी लिपिसाधनद्रव्यं तद्वत् श्यामवर्णा निःसरमाणकालीप्रतिबिंबादिति भावः ४ ७ ७ ७ ७

भ्रूकुटीति तस्याः कुपितदेव्याः विनिष्क्रांतानिःसृता ५ विचित्रेति खट्वांगंपट्टिकाकंकालपंजरस्थंवा नरमालेत्यत्रनरशब्दस्तन्मुंडलाक्षणिकः द्वीपी-
व्याघ्रः शुष्कमांसानिर्मांसदेहा अतएवातिभैरवा ६ अतीति अतिशयितोविस्तारोयस्यतादृशंवदनंयस्याइत्यर्थः ललनंचालनंनिमग्नातिनिम्नप्रवि
ष्टानि आरक्तानिनयनानियस्यास्त्रिनेत्रत्वात् ७ ८ पार्ष्णीति पार्ष्णिग्राहोगजपार्ष्णिरक्षकः अंकुशग्राही महामात्रः योधोगजारूढोवीरः ९

भ्रुकुटीकुटिलात्तस्याललाटफलकाद्द्रुतम् कालीकरालवदनाविनिष्क्रांतासिपाशिनी ५ विचित्रखट्वांगधरानरमालाविभू
षणा द्वीपिचर्मपरीधानाशुष्कमांसातिभैरवा ६ अतिविस्तारवदनाजिव्हाललनभीषणा निमग्नारक्तनयनानादापूरितादि
ङ्मुखा ७ सावेगेनाभिपतिताघातयंतीमहासुरान् सैन्येतत्रसुरारीणामभक्षयततद्बलम् ८ पार्ष्णिग्राहांकुशग्राहियोधघंटा
समन्वितान् समादायैकहस्तेनमुखेचिक्षेपवारणान् ९ तथैवयोधंतुरगैरथंसारथिनासह निक्षिप्यवक्त्रेदशनैश्चर्वयंत्यति
भैरवम् १० एकंजग्राहकेशेषुग्रीवायामथचापरम् पादेनाक्रम्यचैवान्यमुरसान्यमपोथयत् ११ तैर्मुक्तानिचशस्त्राणिम
हास्त्राणितथासुरैः मुखेनजग्राहरुषादशनैर्मथितान्यपि १२

तथैवेति योधमिति जातावेकवचनम् एवंरथमपरमन्यमित्यादानम् चर्वयंतीति वर्तमानसामीप्येभूतेलट् अतिभैरवमितिक्रियाविशेषणम्
१० एकमिति अपोथयत् अवधीत् ११ तैरिति मथितान्यपि मथितानि चकारेत्यन्वयः १२ ७ ७ ७ ७

बलिनामिति महात्मनांमहादेहानाम् १३ १४ १५ शरवर्षैरिति चंडः शरवर्षैः मुंडः सहस्रशः क्षिप्तैश्चक्रैः श्छादयामासइत्यन्वयः एवंपूर्वश्लोकेचंडग्रहणं मुंडस्याप्युपलक्षणम् १६ तानीति मुखंविशमानानिचघनोदरंविशमानान्यर्कबिंबानीवबभुः शानच्छांदसः १७ ततइति भीममितिक्रियाविशेषणम्

बलिनांतद्बलंसर्वमसुराणांमहात्मनाम् ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तथा १३ असिनानिहताःकेचित्केचित्खट्वांगताडिताः जग्मुर्विनाशमसुरादंताग्राभिहतास्तथा १४ क्षणेनतद्बलंसर्वमसुराणांनिपातितम् दृष्ट्वाचंडोभिदुद्रावतांकालीमतिभीषणाम् १५ शरवर्षैर्महाभीमैर्भीमाक्षींतांमहासुरः छादयामासचक्रैश्चमुंडक्षिप्तैःसहस्रशः १६ तानिचक्राण्यनेकानिविशमानानितन्मुखम् बभुर्यथार्कबिंबानिसुबहूनिघनोदरम् १७ ततोजहासातिरुषाभीमंभैरवनादिनी कालीकरालवक्त्रांतर्दुर्दर्शदशनोज्ज्वला १८ उत्थायचमहासिंहंदेवीचंडमधावत गृहीत्वाचास्यकेशेषुशिरस्तेनासिनाच्छिनत् १९ अथमुंडोभ्यधावत्तांदृष्ट्वाचंडंनिपातितम् तमप्यपातयद्भूमौसाखड्गाभिहतंरुषा २० हतशेषंततःसैन्यंदृष्ट्वाचंडंनिपातितम् मुंडंचसुमहावीर्यंदिशोभेजेभयातुरम् २१

वक्त्रांतेवक्त्रमध्येविकटदंतत्वात् दुर्दर्शाः येदशनाः तेषांतेजसाउज्ज्वलातेजोमया १८ उत्थायचेति महासिंहमहाखड्गं उत्थाय उत्थाप्यउद्यमसकोपवारणंयथास्यात्तथाहमित्युक्त्वादेवीचंडमधावत अस्यचंडस्यतेनोद्यतेन १९ अथेति खड्गादिभिर्हतंपूर्वोद्यतखड्गाभिहतंअस्यशिरोनच्छिन्नंखड्गप्रहारमात्रम् २० २१ ७ ७ ७

शिरइति मुंडंसशिरस्कंसदेहमित्यर्थः प्रचंडाट्टहासेनमिश्रंयुक्तंयथाभवतितथाचंडिकांयल्ललाटफलकान्निर्गतांदेवींप्राहेत्यर्थः २२ मयेति अत्रयु
द्धयज्ञेमहापशूइतिरूपकंउपहृतौप्रधानांगद्वारेणचंडस्योपहारः २३ ऋषिरुवाच ताविति कालींललाटभवांकल्याणीतिकर्तृविशेषणम्चंडिकाकौशिकी
२४ यस्मादिति चंडंशिरोद्वाराहेदेविरव्याताभविष्यसीत्यन्वयः चामुंडेति पृषोदरादित्वात्साधुः अनेनेयंनामसीकौशिकीजन्याकालीकौशिकीनि

शिरश्चंडस्यकालीचगृहीत्वामुंडमेवच प्राहप्रचंडाट्टहासमिश्रमभ्येत्यचंडिकाम् २२ मयातवात्रोपहृतौचंडमुंडौमहाप
शू युद्धयज्ञेस्वयंशुंभंनिशुंभंचहनिष्यसि २३ ऋषिरुवाच तावानीतौततोदृष्ट्वाचंडमुंडौमहासुरौ उवाचकालींक
ल्याणीललितंचंडिकावचः २४ यस्माच्चंडंचमुंडंचगृहीत्वात्वमुपागता चामुंडेतिततोलोकेरव्यातादेविभविष्यसि २५
इतिश्रीमार्कं॰ चंडमुंडवधोनामसप्तमोऽध्यायः ७ ऋषिरुवाच चंडेचनिहतेदैत्येमुंडेचविनिपातिते बहुलेषुचसै
न्येषुक्षयितेष्वसुरेश्वरः १ ततःकोपपराधीनचेताःशुंभःप्रतापवान् उद्योगंसर्वसैन्यानांदैत्यानामादिदेशह २ अद्यसर्व
बलैर्दैत्याःषडशीतिरुदायुधाः कंबूनांचतुराशीतिर्निर्यांतुस्वबलैर्वृताः ३

यम्याभवतीत्याहुः २५ इतिशिवभट्टसुतना
गोजी॰ सप्तमोऽध्यायः ७ चंडेति क्षयितेषुकृतक्षयेषु १ ततइति तेषांवधजकोपेनास्वाधीनचेताः अतएवस्त्रीवधेप्यस्यप्रवृत्तिरितिभावःस
र्वसैन्यानामितिदैत्यानांविशेषणम् २ अद्येतिउदायुधास्तत्संज्ञकाश्च कंबूनांतन्नाम्नाम् चतुराशीतिर्दैत्याइतिशेषः ३ ६९ ६९

कोटीति कोटिवीर्याणितन्नामानि धौम्राः धूम्रवंश्याः ४ कालकाः तन्नामानः दौर्हृताः दुर्हृदोपत्यानि मौर्याः तन्नामानः तथाकालकाया अपत्यानिकाल
केयाः असुराःसज्जाः ससामग्रीकाः ५ इतीति भैरवमुग्रम् ६ आयांतमिति आगतमित्यर्थः अंतरंमध्यम् ७ ततइति तन्नादानिति बहुवचनंमहाना

कोटिवीर्याणिपंचाशदसुराणांकुलानिवै शतंकुलानिधौम्राणांनिर्गच्छंतुममाज्ञया ४ कालकादौर्हृदामौर्याःकालकेयास्त
थासुराः युद्धायसज्जानिर्यांतुचाज्ञयात्वरितामम ५ इत्याज्ञाप्यासुरपतिःशुंभोभैरवशासनः निर्जगाममहासैन्यःसहस्रै
र्बहुभिर्वृतः ६ आयांतंचंडिकादृष्ट्वातत्सैन्यमतिभीषणम् ज्यास्वनैःपूरयामासधरणीगगनांतरम् ७ ततःसिंहोमहानादम
तीवकृतवान्नृप घंटास्वनेनतन्नादानंबिकाचोपबृंहयत् ८ धनुर्ज्यासिंहघंटानांनादापूरितदिङ्मुखा निनादैर्भीषणैःका
लीजिग्येविस्तारितानना ९ तन्निनादमुपश्रुत्यदैत्यसैन्यैश्चतुर्दिशम् देवीसिंहस्तथाकालीसरोषैःपरिवारिताः १० एत
स्मिन्नंतरेभूपविनाशायसुरद्विषाम् भवायामरसिंहानामतिवीर्यबलान्विताः ११ ब्रह्मेशगुहविष्णूनांतथेंद्रस्यशक्त
यः शरीरेभ्योविनिष्क्रम्यतद्रूपैश्चंडिकांययुः १२

दमित्येकत्वाविवक्षया अतीवेत्यस्यानेकवारमित्यर्थेवा उपबृंहयदित्यत्रागमशास्त्र
स्यानित्यत्वात् अड्भावः ८ धनुरिति नादैःस्वीयैरापूरितदिङ्मुखाकालीधनुर्ज्यासिंहघंटानांभीषणैर्नादैर्जिग्येजितादेव्याधनुरादिशब्दैःकालीशब्दो
जितइतिभावः ९ तदिति कालीचंडीललाटजासरोषैःसक्रोधैः १० एतस्मिन्निति देवीदानवसंपातावसरेभवायसंपदे ११ ब्रह्मेति विष्णुशब्देनवराहनृ-

सिंहावपिशक्तयः स्वातिरेकिण्योदेवताः शक्तिशक्तिमतोस्तादात्म्यात् १२ ब्रह्मादिरूपैरित्यर्थकं तद्रूपैरितिव्याचष्टे यस्येति तद्वत् तथाविध रूपभूषण
वाहनेत्यर्थः १३ हंसेति विमानाग्रे इत्यस्यास्थितेतिशेषः अक्षसूत्रंजपमाला ब्रह्माणीब्रह्माणमानयति वेष्टयतीतिव्युत्पत्त्यायंशब्दःसाधुः १४ माहेश्वरी
ति महाहीतक्षकानंतौ वलयौचंद्र रेखाचंद्र कलासैवविभूषणंयस्याः १५ कौमारीति गुहरूपिणी गुहसमानाकारा कुमारसंबंधिनीशक्तिरायथावित्य

यस्यदेवस्ययद्रूपंयथाभूषणवाहनम् तद्वदेवहितच्छक्तिरसुरान्योद्धुमाययौ १३ हंसयुक्तविमानाग्रेसाक्षसूत्रकमंडलुः
आयाताब्रह्मणःशक्तिर्ब्रह्माणीसाभिधीयते १४ माहेश्वरीवृषारूढात्रिशूलवरधारिणी महाहिवलयाप्रासाच्चंद्ररेखावि
भूषणा १५ कौमारीशक्तिहस्ताचमयूरवरवाहना योद्धुमभ्याययौदैत्यानंबिकागुहरूपिणी १६ तथैववैष्णवीशक्तिर्गरु
डोपरिसंस्थिता शंखचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ १७ यज्ञवाराहमतुलंरूपंयाबिभ्रतीहरेः शक्तिःसाप्याययौतत्र
वाराहींबिभ्रतीतनुम् १८

र्थान्नपौनरुक्त्यम् ऐंद्रीत्युक्तापियथाशक्रस्तथैवसेतिवत् अंबिकापदेनगुहस्यशिवव्यूहत्वंसूचयति १६ तथैवेति
अत्रशार्ङ्गपदेनबाणोप्युपलक्ष्यते बाहुभिर्गरुडारूढा शंखचक्रगदासिनी शार्ङ्गबाणधराजातावैष्णवीरूपशालिनीति वामनपुराणात् एतेनास्याःषड्गु
जात्वंसूचितम् १७ यज्ञेति यज्ञांगकल्पितंवराहाकारंबिभ्रतोहरेरित्यनेनास्याः विष्णुत्वमेवेतिसूचितम् एवंनृसिंहोपि तत्रैवकालीपुराणे शरभवरो
हयुद्धेविष्णोः शरभपक्षपातित्वंवराहबलहारकत्वमुक्तम् नृसिंहस्यच वराहानुयायित्वमुक्तंविरुध्यतेतिवाच्यं तस्यलीलामात्रत्वात् १८ ७

१९ वज्रेति यथाशक्रइत्याकारपरम् एवंचसर्वास्तत्तदाकारताद्रष्टव्या गजराजऐरावतः २० अतिविशिष्टतेजसः कौशिक्याः सविधे गंतुमशक्तास्तादे
वशक्तीरीशानोदेव्यैदर्शितवानित्याह ततइति ताभिःपरिवृतः ईशानः ममप्रीत्या एताभिर्देवशक्तिभिः सहासुराहन्यंतामितिचंडिकामाहेत्यन्वयः स्व-
शक्तेः पार्वत्याः प्रादुर्भूतत्वेनधृष्टतयाईशानएवतयोक्तवानितिभावः अंडाधिकारिणइमेब्रह्मादयः अंडांतराधिकारिणांशुंभादिजितत्वेनधृष्टत्वासंभवा
त् २१ स्वस्यापिसहायप्रदर्शनेनैषाहृष्टाभगवतीत्यस्योत्तरमाह किंतु काचिन्मशक्तिरित्याह ततइति अतिभीषणादर्शनमात्राद्भयकरी अत्युग्रा

नारसिंहीनृसिंहस्यबिभ्रतीसदृशंवपुः प्राप्तातत्रसटाक्षेपक्षिप्तनक्षत्रसंहतिः १९ वज्रहस्तातथैवैंद्रीगजराजोपरिस्थि
ता प्राप्तासहस्रनयनायथाशक्रस्तथैवसा २० ततःपरिवृतस्ताभिरीशानोदेवशक्तिभिः हन्यंतामसुराःशीघ्रंममप्री
त्याहचंडिकाम् २१ ततोदेवीशरीरात्तुविनिष्क्रांतातिभीषणा चंडिकाशक्तिरत्युग्राशिवाशतनिनादिनी २२ साचाहधू
म्रजटिलमीशानमपराजिता दूतत्वंगच्छभगवन्पार्श्वंशुंभनिशुंभयोः २३

रौद्रस्वभावाशिवानांशृगालीनांशतेननिनादिनी शतशब्दोनंतवाचीनिनदद्नंतशिवावृता २२ साचेति धूम्रजटिलंधूम्रवर्णजटावंतं अपराजि
तानदाख्या अपरैरजितात्चदूतभावंवार्तावहत्वंगच्छ शुंभनिशुंभयोः पार्श्वेचगच्छेत्यन्वयः आहेतिनिपातः कालमात्रेतेनाब्रवीदित्यर्थः त्रिमूर्त्यं
तशिवापेक्षयायस्याः कौशिक्यास्तत्प्रादुर्भावकसमक्षतयाआधिक्येनतस्यदूत्येतत्प्रेषणंनानुचितं २३ ७ ७ ७ ७

ब्रूहीति येचतत्रशुंभां तिकेन्येदानवास्तांश्चब्रूहीत्यन्वयः युद्धाययुद्धंकर्तुम् २४ वचनमाह त्रैलोक्यमितिस्पष्टम् २५ बलेति अवलेपोगर्वः मच्छिवाः
यामयासहनिनदंत्यः प्रादुर्भूताःपिशितंमांसम् २६ यतइति दूतमेवदौत्यम् प्रज्ञाद्यण्शिवदूतीगौरादित्वात्ङीप् आर्षोगपूर्वपदादितिवा २७
तेपीति अमर्षेणसर्वतः पूरिताः यतः यंदेशमाक्रम्यकात्यायनीस्थितातंदेशंजग्मुरित्यन्वयः मूलशत्त्यभेदेतस्याअपिकात्यायनीत्वोक्तिः २८ तत

ब्रूहिशुंभंनिशुंभंचदानवावतिगर्वितौ येचान्येदानवास्तत्रयुद्धायसमुपस्थिताः २४ त्रैलोक्यमिंद्रोलभतांदेवाःसंतुहविर्भुजः यूयंप्रयातपातालंयदिजीवितुमिच्छथ २५ बलावलेपादथचेद्भवंतोयुद्धकांक्षिणः तदागच्छततृप्यंतुमच्छिवाःपिशितेनवः २६ यतोनियुक्तोदौत्येनतयादेव्याशिवःस्वयम् शिवदूतीतिलोकेस्मिंस्ततःसाख्यातिमागता २७ तेपिश्रुत्वावचोदेव्याःशर्वाख्यातंमहासुराः अमर्षापूरिताजग्मुर्यतःकात्यायनीस्थिता २८ ततःप्रथममेवाग्रेशरशक्त्यृष्टिवृष्टिभिः ववर्षुरुद्धतामर्षास्तांदेवीममरारयः २९ साचतान्प्रहितान्बाणान्शूलशक्तिपरश्वधान् चिच्छेदलीलयाध्मातधनुर्मुक्तैर्महेषुभिः ३० तस्याग्रतस्तथाकालीशूलपातविदारितान् खट्वांगपोथितांश्चान्यान्कुर्वतीव्यचरत्तदा ३१

तिप्रथममादौअग्रेसंमुखेववर्षुरितिगुणश्छांदसः उद्धतःप्रकटः अनेनस्त्रीप्रथमतोहंतुमयोग्येतिविवेकराहित्येनरौद्राविष्टत्वंसूचितम् २९ ३०
तस्येति अस्याअग्रतइतिच्छेदः छांदसःसंधिः तथाचंडीवत् तदादेव्याशस्त्रच्छेदोखट्वांगम् कंकालपंजरम् पट्टिकावा कालीललाटजा कुर्वतीत्युतनच्छास्त्राभावात् ३१

कमंडल्विति आक्षेपः प्रक्षेपः वीर्यंबलम् हततेजसः धावतीतिस्मयोगेभूतेलट् येनयेनप्रदेशेन ३२ माहेश्वरीतिस्पष्टम् ३३ ऐंद्रीति दैत्यदानवयोर्मातृतो
भेदः ऐंन्द्याः कुलिशपातेनेत्यर्थः ३४ तुंडेति वाराहीचासौमूर्तिश्चवाराहमूर्तिस्तयाचक्रेणेत्यनेनवाराह्यामुखमेववराहसदृशंनत्वन्यत् एवंशक्तिमतोवरा
हस्यापिबोध्यम् ३५ नखैरिति आजौरणे अंबरमाकाशम् ३६ चंडेति चंडउत्कटः सकोपोवा शिवदूत्यभिदूषिताइतितृतीयासमासः प्रापितमूर्च्छा

कमंडलुजलाक्षेपहतवीर्यान्हतौजसः ब्रह्माणीचाकरोच्छत्रून्येनयेनस्मधावति ३२ माहेश्वरीत्रिशूलेनतथाचक्रेणवैष्णवी
दैत्याजघानकौमारीतथाशक्त्यातिकोपना ३३ ऐंद्रीकुलिशपातेनशतशोदैत्यदानवाः पेतुर्विदारिताःपृथ्व्यांरुधिरौघप्रवर्षि
णः ३४ तुंडप्रहारविध्वस्तादंष्ट्राग्रक्षतवक्षसः वाराहमूर्त्यान्यपतंश्चक्रेणचविदारिताः ३५ नखैर्विदारितांश्चान्यान्भक्ष
यंतीमहासुरान् नारसिंहीचचाराजौनादापूर्णदिगंतरा ३६ चंडाट्टहासैरसुराःशिवदूत्यभिदूषिताः पेतुर्विदारिताभूमौ
तांश्चखादाथसातदा ३७ इतिमातृगणंक्रुद्धंमर्दयंतंमहासुरान् दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः ३८ पलायन
परान्दृष्ट्वादैत्यान्मातृगणार्दितान् योद्धुमभ्याययौक्रुद्धोरक्तबीजोमहासुरः ३९

साशिवदूती ३७ इतिपूर्वोक्तैरभ्युपायैःसं
ग्रामसाधनैः दैत्यान्मर्दयंतंमातृगणंदृष्ट्वानेशुः पलायिताइत्यन्वयः ब्रह्माण्याद्याअष्टमातरः ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा वाराहीना
रसिंह्यैंद्री चामुंडामातरःस्मृता इतिडामरतंत्रेनवार्ण विधानेउक्ताः ३८ पलायनेति रक्तंबीजंकारणंयस्यसः रक्तबीजः ३९ ७ ७

तदेवाह रक्तेति अस्य रक्तबीजस्य मेदिन्याः मेदिन्यां स्थितत्वेत्यर्थः ल्यब्लोपे पंचमी ४० सरक्तबीजः ४१ कुलिशेनेति तस्य रक्तबीजस्य ४२ यावंत
इति वीर्यं प्रभावः बलं शारीरं विक्रमः उत्साहरूपः ४३ तइति समं सह अत्युग्रेति शस्त्रविशेषणम् समस्तं ४४ पुनश्चेति ववाहेति बहिर्गताविरयस्य

रक्तबिंदुर्यदा भूमौ पतत्यस्य शरीरतः समुत्पतति मेदिन्यास्तत्प्रमाणो महासुरः ४० युयुधे सगदापाणिरिंद्रशक्त्या महासु
रः ततश्चैंद्री स्ववज्रेण रक्तबीजमताडयत् ४१ कुलिशेनाहतस्याशु बहु सुस्राव शोणितम् समुत्तस्थुस्ततो योधास्तद्रू
पास्तत्पराक्रमाः ४२ यावंतः पतितास्तस्य शरीराद्रक्तबिंदवः तावंतः पुरुषा जातास्तद्वीर्यबलविक्रमाः ४३ तेचापि युयुधु
स्तत्र पुरुषा रक्तसंभवाः समं मातृभिरत्युग्रशस्त्रपातातिभीषणम् ४४ पुनश्च वज्रपातेन क्षतमस्य शिरो यदा ववाह र
क्तं पुरुषास्ततो जाताः सहस्रशः ४५ वैष्णवी समरे चैनं चक्रेणाभिजघान ह गदया ताडयामास ऐंद्री तमसुरेश्वरम् ४६ वै
ष्णवीचक्रभिन्नस्य रुधिरस्रावसंभवैः सहस्रशो जगद्व्याप्तं तत्प्रमाणैर्महासुरैः ४७ शक्त्या जघान कौमारी वाराही च तथा
सिना माहेश्वरी त्रिशूलेन रक्तबीजं महासुरम् ४८ स चापि गदया दैत्यः सर्वा एवाहनत्पृथक् मातृः कोपसमाविष्टो रक्तबी
जो महासुरः ४९

रूपम् ४५ वैष्णवीति ऐंन्द्याः शक्तेरितं पराङ्मुखं स्वसंमुखं प्राप्तं एनं वैष्णवी चक्रेणाभिजघान गदया च ताडयामासेत्यन्वयः ४६
४७ शक्त्येति ४८ सचापीति अहनदिति छांदसं दितेरपत्यं दैत्यः महांतो सुराः यस्मादिति न पौनरुक्त्यम् ४९ ७ ७ ७ ७

५० नैश्चेति उत्तमंनिरतिशयंसकलंजगदित्यतिशयोक्तिः ५१ तानिति तान् विषण्णान्दृष्ट्वासत्वरात्वरयासहिताचंडिकासुरान्प्राह यूयंमाविषीदतेतिशेषः
५२ एवंसुरानाश्वास्यविस्तीर्णवदनेरक्तबिंदोरितिजात्यपेक्षयाततोजातान्महासुरान् मच्छस्त्रपातसंभूतान् रक्तबिंदूंश्चभूमिमप्राप्तानेवप्रतीच्छगृ



तस्याहतस्यबहुधाशक्तिशूलादिभिर्भुवि पपातयोवैरक्तौघस्तेनासन्शतशोसुराः ५० तैश्चासुरासृक्संभूतैरसुरैःसकलं
जगत् व्याप्तमासीत्ततोदेवाभयमाजग्मुरुत्तमम् ५१ तान्विषण्णान्सुरान्दृष्ट्वाचंडिकाप्राहसत्वरा उवाचकालींचामुंडे
विस्तीर्णंवदनंकुरु ५२ मच्छस्त्रपातसंभूतान्रक्तबिंदून्महासुरान् रक्तबिंदोःप्रतीच्छत्वंवक्त्रेणानेनवेगिना ५३ भक्षयंती
चररणेतदुत्पन्नान्महासुरान् एवमेषःक्षयंदैत्यःक्षीणरक्तोगमिष्यति ५४ भक्ष्यमाणास्त्वयाचोग्रानचोत्पत्स्यंतिचापरे
इत्युक्त्वातांततोदेवीशूलेनाभिजघानतम् ५५ मुखेनकालीजगृहेरक्तबीजस्यशोणितम् ततोसावाजघानाथगदयातत्र
चंडिकाम् ५६ नचास्यावेदनांचक्रेगदापातोल्पिकामपि तस्याहतस्यदेहात्तुबहुसुस्रावशोणितम् ५७

ह्णाण ५३ किंच पानसमयेत्वद्वक्त्रेसमुत्पन्नान् महासुरान्भक्षयंतीरणेचर एवंप्रकारेणैवदैत्यः क्षयंगमिष्यति ५४ भक्ष्यमाणइति उत्पत्स्यंतीति अनुदा
त्तेत्वलक्षणंतङोनित्यत्वान्नतङ् ५५ मुखेनेति शोणितंभूगतमेवविस्तीर्णत्वाद्वदनस्य असौरक्तबीजः तत्रयुद्धे ५६ नचेति चिदानंदात्मत्वादितिभावः ५६

यतस्ततइति सर्वतइत्यर्थः अतिविस्तीर्णत्वात् हतस्यउत्तरार्द्धमुत्तरान्वयि ५८ तांश्चेति उत्तरार्द्धमुत्तरान्वयि असिभिरितिक्रियापेक्षंबहुवचनम् ऋष्टि भिरित्यप्येवं ऋष्टिरुभयतोधारोसिः ५९ जघानेति शस्त्रसंघैः समूहैः समाहतइतितृतीयातत्पुरुषः ६० नीरक्तश्चेति कात्स्न्यात् निःशेषरुधिरत्वात्नीरक्त

यतस्ततस्तद्वक्त्रेणचामुंडासंप्रतीच्छति मुखेसमुद्गतायेस्यारक्तपातान्महासुराः ५८ तांश्चखादाथचामुंडापपौतस्यचशोणि तम् देवीशूलेनवज्रेणबाणैरसिभिऋष्टिभिः ५९ जघानरक्तबीजंतंचामुंडारक्तशोणितम् सपपातमहीपृष्ठेशस्त्रसंघस माहतः ६० नीरक्तश्चमहीपालरक्तबीजोमहासुरः ततस्तेहर्षमतुलमवापुस्त्रिदशानृप ६१ हतेमातृगणस्तस्मिन्ननर्त्तासृ ङ्मदोद्धतः ६२ इतिश्रीमार्कंडेयपुराणे० देवीमाहात्म्येरक्तबीजवधोनाम अष्टमोऽध्यायः ८ राजोवाच विचित्रमिदमाख्यातंभगवन्भवतामम देव्याश्चरितमाहात्म्यंरक्तबीजवधाश्रितम् १ भूयश्चेच्छाम्यहंश्रोतुंरक्तबीजे निपातिते चकारशुंभोयत्कर्मनिशुंभश्चातिकोपनः २ ऋषिरुवाच चकारकोपमतुलंरक्तबीजेनिपातिते शुंभा सुरोनिशुंभश्चहतेष्वन्येषुचाहवे ३

ञ्चसन्मातृगणोब्राह्मण्यादिसमूहोननर्तेत्यर्थः ६१ ६२ इतिशिवभट्टसुत० अष्टमोऽध्या यः ८ राजोवाच विचित्रमिति राजासुरथः चरितंकर्ममाहात्म्यंप्रभावः समाहारद्वंद्वः आश्रितंजनकं १,२ ऋषिरुवाच चकारेतिआहवेरणे ३

हन्यमानमिति उद्वहन्धारयन् ४ संदष्टौष्ठपुटाः दंताभ्यामंतः संधृतौष्ठाः तथासतिपुटाकारताभवति ५, ६ ततइति देव्याइतिसहार्थेतृतीया ७ चिच्छे
देति ताभ्यामस्तान्क्षिप्तानित्यन्वयः ८ ९ ताडितइति क्षुरविशेषः चर्मवालकं अष्टसंख्याकरत्नादिघटितंचंद्राकारसहितम् १० छिन्नेइति शक्तिक्षे

हन्यमानंमहासैन्यंविलोक्यामर्षमुद्वहन् अभ्यधावन्निशुंभोथमुख्ययासुरसेनया ४ तस्याग्रतस्तथापृष्ठेपार्श्वयोश्चम
हासुराः संदष्टौष्ठपुटाःक्रुद्धाहंतुंदेवीमुपाययुः ५ आजगाममहावीर्यःशुंभोपिस्वबलैर्वृतः निहंतुंचंडिकांकोपात्कृत्वायु
द्धंतुमातृभिः ६ ततोयुद्धमतीवासीद्देव्याशुंभनिशुंभयोः शरवर्षमतीवोग्रंमेघयोरिववर्षतोः ७ चिच्छेदास्तांच्छरां
स्ताभ्यांचंडिकास्वशरोत्करैः ताडयामासचांगेषुशस्त्रौघैरसुरेश्वरौ ८ निशुंभोनिशितंखड्गंचर्मचादायसुप्रभम् अताड
न्मूर्ध्निसिंहंदेव्यावाहनमुत्तमम् ९ ताडितेवाहनेदेवीक्षुरप्रेणासिमुत्तमम् निशुंभस्याशुचिच्छेदचर्मचाप्यष्टचंद्रकम् १०
छिन्नेचर्मणिखड्गेचशक्तिंचिक्षेपसोऽसुरः तामप्यस्यद्विधाचक्रेचक्रेणाभिमुखागताम् ११ कोपाध्मातोनिशुंभोथशू
लंजग्राहदानवः आयांतंमुष्टिपातेनदेवीतच्चाप्यचूर्णयत् १२ आविध्याथगदांसोपिचिक्षेपचंडिकांप्रति सापिदेव्यात्रिशू
लेनभिन्नाभस्मत्वमागता १३

पोदेवींप्रति अभिमुखागतांतांदेवीचिच्छेदेत्यर्थः ११ कोपेति जग्राहग्रहणपूर्वकंप्रक्षेपेत्रग्रहिः आयांतंतच्छू
लं १२ आविध्यभ्रामयित्वादेव्याकर्त्र्यात्रिशूलेनकरणेनसापिगदाभिन्नाभस्मत्वमागता आपातितान्च अंतर्भाविण्यर्थान्क्तः १३ ॥ ॥

पुंगवश्रेष्ठं अत्रनिशुंभस्यमूर्छासंपादनेनपातनम् १४ तस्मिन्निति प्रययौ शुंभइतिशेषः १५ सइति यथासामुद्रिकाप्रकारेणात्युच्चैर्भुजैर्नभोव्याप्य
बभावित्यर्थः १६ आयांतमागच्छंतम् १७ स्वनेनचेति चेनशंखज्याशब्दयोः समुच्चयः वधोनाशः विधायिनेतिस्वनविशेषणम् १८ उपदिशः सा

ततःपरशुहस्तंतमायांतंदैत्यपुंगवम् आहत्यदेवीबाणौघैरपातयत्भूतले १४ तस्मिन्निपतितेभूमौनिशुंभेभीमविक्रमे
भ्रातर्यतीवसंक्रुद्धः प्रययौयोद्धुमंबिकाम् १५ सरथस्थस्तथात्युच्चैर्गृहीतपरमायुधैः भुजैरष्टाभिरतुलैर्व्याप्याशेषंबभौ
नभः १६ तमायांतंसमालोक्यदेवीशंखमवादयत् ज्याशब्दंचापिधनुषश्चकारातीवदुःसहम् १७ पूरयामासककुभोनि
जघंटास्वनेनच समस्तदैत्यसैन्यानांतेजोवधविधायिना १८ ततःसिंहोमहानादैस्त्याजितेभमहामदैः पूरयामासगगनंगां
तथोपदिशोदश १९ ततःकालीसमुत्पत्यगगनंक्ष्मामताडयत् कराभ्यांतन्निनादेनप्राक्स्वनास्तेतिरोहिताः २० अट्टाट्टहा
समशिवंशिवदूतीचकारह तैःशब्दैरसुरास्त्रेसुः शुंभःकोपंपरंययौ २१ दुरात्मंस्तिष्ठतिष्ठेतिव्याजहारांबिकायदा तदा
जयेत्यभिहितंदेवैराकाशसंस्थितैः २२

मान्यदिगाक्षेपोपदिकत्वंपूर्वादीनांदशानांनदाहदशेति १९ समुत्पत्यउत्प्लुत्यपुनरवती
र्यपृथ्वीं २० अट्टाट्टहासंशकंध्वादित्वात्पररूपम् अशिवंरिपूणांभयदम् २१ आकाशेसंस्थितैः देवैः दानवसंग्रामदर्शनायतत्रस्थितैः २२ छ

महोल्कयेति महाज्वालावत्याशक्त्येत्यर्थकं यद्वा तन्नामकशक्त्येत्यर्थकं २३ सिंहेति उत्तरार्द्धस्यतथापीत्यादिनिर्घातनिःस्वनः उत्पातध्वनिः जितवानि
त्यस्यशुंभनादमितिशेषः २४ शुंभेति अनेनदेवीशुंभयोः समयुद्धमुक्तम् २५ ततइति अभिहतः समंताद्धतोभिहतः २६ ततइति शुंभमूर्छानंतरंनि



शुंभेनागत्ययाशक्तिर्मुक्ताज्वालातिभीषणा आयांतीवन्हिकूटाभासानिरस्तामहोल्कया २३ सिंहनादेनशुंभस्यव्याप्तंलो
कत्रयांतरम् निर्घातनिःस्वनोघोरोजितवानवनीपते २४ शुंभमुक्तांच्छरान्देवीशुंभस्तत्प्रहितांच्छरान् चिच्छेदस्वशरैरु
ग्रैःशतशोथसहस्रशः २५ ततःसाचंडिकाक्रुद्धाशूलेनाभिजघानतम् सतदाभिहतोभूमौमूर्छितोनिपपातह २६ ततोनि
शुंभःसंप्राप्यचेतनामात्तकार्मुकः आजघानशरैर्देवींकालींकेसरिणंतथा २७ पुनश्चकृत्वाबाहूनामयुतंदनुजेश्वरः चक्रा
युधेनदितिजश्छादयामासचंडिकाम् २८ ततोभगवतीक्रुद्धादुर्गादुर्गार्तिनाशिनी चिच्छेदतानिचक्राणिस्वशरैःसायकां
श्चतान् २९ ततोनिशुंभोवेगेनगदामादायचंडिकाम् अभ्यधावतवैहंतुंदैत्यसेनासमावृतः ३०

शुंभोयः पूर्वंमूर्च्छितः आत्तंगृहीतम् २७ पुनरिति दनोः पुत्रोपिदितिजसमानशीलत्वाद्दितिजः २८ ततइति दुर्गेसंकटे आर्तेः पीडायाः नाशि
नीतिणिनिप्रत्ययः २९ ततइति दैत्यसेनयासमावृतः ३० छ छ छ छ छ

३१ शूलेति समायांतम् संमुखमायांतम् वेगाविद्धेनवेगाक्षिप्तेन ३२, ३३ स्वनवदितिप्रहस्येत्यस्यविशेषणम् ३४ ततइति उग्रमितिक्रियाविशेषणम् काली
शिवदूतीचचखादेत्यन्वयः ३५ निराकृताःध्वस्ताः मंत्रोत्रप्रणवः ३६, ३७ खंडंखंडंखंडप्रकाराः खंडस्यखंडावायस्यांक्रियायांतथाकृताः आद्येप्रकारे

तस्यापततएवाशुगदांचिच्छेदचंडिका खड्गेनशितधारेणसचशूलंसमाददे ३१ शूलहस्तंसमायांतंनिशुंभममरार्दनम् हृ
दिविव्याधशूलेनवेगाविद्धेनचंडिका ३२ भिन्नस्यतस्यशूलेनहृदयान्निःसृतोपरः महाबलोमहावीर्यस्तिष्ठेतिपुरुषोवद
न् ३३ तस्यनिष्क्रामतोदेवीप्रहस्यस्वनवत्ततः शिरश्चिच्छेदखड्गेनततोसावपतद्भुवि ३४ ततःसिंहश्चखादोग्रदंष्ट्राक्षु
ण्णशिरोधरान् असुरांस्तांस्तदाकालीशिवदूतीतथापरान् ३५ कौमारीशक्तिनिर्भिन्नाःकेचिन्नेशुर्महासुराः ब्रह्माणीमं
त्रपूतेनतोयेनान्येनिराकृताः ३६ माहेश्वरीत्रिशूलेनभिन्नाःपेतुस्तथापरे वाराहीतुंडघातेनकेचिच्चूर्णीकृताभुवि ३७ खं
डंखंडंचचक्रेणवैष्णव्यादानवाःकृताः वज्रेणचैंद्रीहस्ताग्रविमुक्तेनतथापरे ३८ केचिद्विनेशुरसुराःकेचिन्नष्टामहाह
वात् भक्षिताश्चापरेकालीशिवदूतीमृगाधिपैः ३९ इतिश्रीमार्कंडेयपुराणेदेवीमाहात्म्येनिशुंभवधोनामनवमोऽ
ध्यायः ९

गुणवचनस्येतिद्वित्वम् वज्रेणचखंडंखंडंकृत्वाइत्येव ३८ विनेशुर्मृताः नष्टाः पलायिताः
३९ इतिश्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतेसप्तशतीव्याख्यानेनवमोऽध्यायः ९ छ छ छ छ

ऋषिरुवाच निशुंभमिति १ बलेति बलगर्वेणदुर्विनीतेदुर्गेमागर्वमावह यात्वमतिमानिनीसती अन्यासांबलमाश्रित्ययुद्ध्यसेइत्यन्वयः २ देव्युवाच
एकैवेति एकास्वगतसजातीयभेदहीनापरमात्मस्वरूपत्वात् अपरान्याममसहायभूताद्वितीयाकास्तिनकापीत्यर्थः अनुभूयमानस्तुभेदोनवास्तवइत्याह
पश्येति वाक्यार्थस्यकर्मत्वंमद्विभूतयइत्यनेनभेदंनिरस्यति ३ ततइति तनौशरीरेलयंअपृथक्भावंअनेनब्रह्मादिभ्यः आविर्भूतानामप्यत्रलयदर्श

ऋषिरुवाच निशुंभंनिहतंदृष्ट्वाभ्रातरंप्राणसंमितम् हन्यमानंबलंचैवशुंभः क्रुद्धोब्रवीद्वचः १ बलावलेपाद्दुष्टेत्वंमादुर्गे
गर्वमावह अन्यासांबलमाश्रित्ययुद्ध्यसेयातिमानिनी २ देव्युवाच एकैवाहंजगत्यत्रद्वितीयाकाममापरा पश्यैतादु
ष्टमय्येवविशंत्योमद्विभूतयः ३ ततः समस्तास्तादेव्योब्रह्माणीप्रमुखालयम् तस्यादेव्यास्तनौजग्मुरेकैवासीत्तदांबिका ४
देव्युवाच अहंविभूत्याबहुभिरिहरूपैर्यदास्थिता तत्संहृतंमयैकैवतिष्ठाम्याजौस्थिरोभव ५ ऋषिरुवाच
ततः प्रववृतेयुद्धंदेव्याः शुंभस्यचोभयोः पश्यतांसर्वदेवानामसुराणांचदारुणम् ६ शरवर्षैः शितैः शस्त्रैस्तथास्त्रैश्चै
वदारुणैः तयोर्युद्धमभूद्भूयः सर्वलोकभयंकरम् ७

नेनसमस्तोपादानत्वमस्याएवेतिदर्शयति तच्चमूलशक्त्यभेदादित्युक्त
म् ४ देव्युवाच अहमिति अहंविभूत्यैश्वर्येणबहुभिः रूपैः यद्बहुत्वमास्थितातद्बहुत्वंमयासंहृतंतस्मादहमकैवतिष्ठामित्वमपिरणेस्थिरोभवे
त्यर्थः अनेनापितदेवदृढीकृतम् ५ ऋषिरुवाच ततइति पश्यतामित्यनादरेषष्ठी ६ भूयः महत् ७ ॐ ॐ

८ उग्रंचतत्हुंकारोच्चारणंचतदादिभूतंयेषामस्त्राणां ९ ततस्तस्मात्कुपिताधनुः इषुभिःसह १० छिन्नेइति तथातेनप्रकारेणछिन्नेधनुषीत्यन्वयः ११
ततइति चर्मचेति चेनाश्वसारथ्योः समुच्चयः १२, १३ तदाहहताश्वइति १४ , १५ समुष्टिमिति देव्याःहृदये इत्यन्वयः तलंप्रसृतचपेटः १६ , १७ उच्चै

दिव्यान्यस्त्राणिशतशोमुमुचेयान्यथांबिका बभंजतानिदैत्येंद्रस्तत्प्रतीघातकर्तृभिः ८ मुक्तानितेनचास्त्राणिदिव्यानिपर
मेश्वरी बभंजलीलयैवोग्रहुंकारोच्चारणादिभिः ९ ततःशरशतैर्देवीमाच्छादयतसोऽसुरः सापितत्कुपितादेवीधनुश्चिच्छे
दचेषुभिः १० छिन्नेधनुषिदैत्येंद्रस्तथाशक्तिमथाददे चिच्छेददेवीचक्रेणतामप्यस्यकरस्थिताम् ११ ततःखड्गमुपादाय
शतचंद्रंचभानुमत् अभ्यधावततांदेवींदैत्यानामधिपेश्वरः १२ तस्यापततएवाशुखड्गंचिच्छेदचंडिका धनुर्मुक्तैःशि
तैर्बाणैश्चर्मचार्ककरामलम् १३ हताश्वःसतदादैत्यश्छिन्नधन्वाविसारथिः जग्राहमुद्गरंघोरमंबिकानिधनोद्यतः १४
चिच्छेदापततस्तस्यमुद्गरंनिशितैःशरैः तथापिसोऽभ्यधावत्तांमुष्टिमुद्यम्यवेगवान् १५ समुष्टिंपातयामासहृदयेदैत्य
पुंगवः देव्यास्तंचापिसादेवीतलेनोरस्यताडयत् १६ तलप्रहाराभिहतोनिपपातमहीतले सदैत्यराजःसहसापुनरेवत
थोत्थितः १७ उत्पत्यचप्रगृह्योच्चैर्देवींगगनमास्थितः तत्रापिसानिराधारायुयुधेतेनचंडिका १८

गगनंइत्यन्वयः आस्थितः आश्रितवान् निराधारास्वप्रयत्नेतरपाताभावहेतुहीनातेनशुंभेन १८ ७ ७ ७ ७

नियुद्धंबाहुयुद्धंतद्विशेषणम् प्रथममितिमुख्यार्थकम् सिद्धाः देवयोनिविशेषाः मुनयोऋषयः १९ उत्पात्यकंदुकवदुपरिक्षिप्तः पतनसमयेचरणमुद्धृत्य-
भ्रामयामास धरणीतलेनिक्षेपचेत्यर्थः २०,२१,२२,२३ उत्पातेति उत्पातसूचकामेघाः शुंभादेवाशुंभंच उल्कादिव्यतेजाप्राक् शुंभवधात् तथानद्य

नियुद्धंखेतदादैत्यचंडिकाचपरस्परम् चक्रतुःप्रथमंसिद्धमुनिविस्मयकारकम् १९ ततोनियुद्धंसुचिरंकृत्वातेनांबिकासह उत्पात्य
भ्रामयामासचिक्षेपधरणीतले २० सक्षिप्तोधरणींप्राप्यमुष्टिमुद्यम्यवेगतः अभ्यधावतदुष्टात्माचंडिकानिधनेच्छया २१ त
मायांतंततोदेवीसर्वदैत्यजनेश्वरम् जगत्यांपातयामासभित्वाशूलेनवक्षसि २२ सगतासुःपपातोर्व्यांदेवीशूलाग्रविक्षतः चाल
यन्सकलांपृथ्वींसाब्धिद्वीपांसपर्वताम् २३ उत्पातमेघाःसोल्कायेप्रागासंस्तेशमंययुः सरितोमार्गवाहिन्यस्तथासंस्तत्रपाति
ते २४ ततःप्रसन्नमखिलंहतेतस्मिन्दुरात्मनि जगत्स्वास्थ्यमतीवासीन्निर्मलंचाभवन्नभः २५ ततोदेवगणाःसर्वेहर्षनिर्भरमा
नसाः बभूवुर्निहतेतस्मिन्गंधर्वाललितंजगुः २६ अवादयंस्तथैवान्येननृतुश्चाप्सरोगणाः ववुःपुण्यास्तथावाताःसुप्रभोभू
द्दिवाकरः २७ जज्वलुश्चाग्नयःशांताःशांतादिग्जनितस्वनाः २८ इतिश्रीमार्कं॰ शुंभवधोनामदशमोऽध्यायः १०

स्सरितोमार्गवाहिन्यः नपूर्ववदुत्पथगामिन्यः आसन् तत्र शुंभे २४,२५,२६ पुण्याः अनुकूलाः २७ जज्वलुरिति अग्नयः आहवनीयादयः शांताःसौम्याः
संतोजज्वलुः शांताः दिक्षुजनिताः स्वनाः उत्पातसूचकस्फुरणादिशब्दायेषांते २८ इतिशिव॰ नागोजीभट्टकृतेदशमोऽध्यायः १० ६९

ऋषिरुवाच देव्येति तत्रयुद्धेवन्हिपुरोगमाः वन्हिमुख्याः कात्यायनीमित्यनेन परस्परमासामैक्यंसूचयति इष्टस्यशंभ्वादिवधस्यलाभात्प्राप्तेः नुमागमः विकाशीनिविकस्वराणिवक्त्राणियेषांनेतुपादपूरणे विकाशिताः आशाःयैः १ देवीति प्रपन्नाभक्ताः आदरेप्रसीदेतित्रिरुक्तिः चराचरस्य मध्येत्वमीश्वरीस्वतंत्राइतरत्सर्वंत्वत्परतंत्रमितिभावः २ आधारभूतेति तत्रहेतुः महीस्वरूपेणेतिस्थितिः अपांस्वरूपस्थितया अवभिन्नस्वरूपे

ऋषिरुवाच देव्याहतेतत्रमहासुरेंद्रेसेंद्राःसुरावन्हिपुरोगमास्ताम् कात्यायनींतुष्टुवुरिष्टलाभाद्विकाशिवक्त्रास्तुवि कशिताशाः १ देविप्रपन्नार्तिहरेप्रसीदप्रसीदमातर्जगतोखिलस्य प्रसीदविश्वेश्वरिपाहिविश्वंत्वमीश्वरीदेविचराच रस्य २ आधारभूताजगतस्त्वमेकामहीस्वरूपेणयतःस्थितासि अपांस्वरूपस्थितयात्वयैतदाप्यायतेकृत्स्नमलंघ्य वीर्ये ३ त्वंवैष्णवीशक्तिरनंतवीर्याविश्वस्यबीजंपरमासिमाया संमोहितंदेविसमस्तमेतत्त्वंवैप्रसन्नाभुविमुक्तिहेतुः ४

णेतिस्थितयागमकत्वात्समासः आप्यायते प्यायीत्यतः कर्मणीयकौ अनेनोक्तलक्षणेनसर्वात्म्यंविवक्षितम् ३ त्वमिति आद्यपादेपालन-शक्तिमत्त्वं द्वितीयेकारणशक्तिमत्वं माया अविद्या त्वयैवतत्संमोहितंसंसारगर्तेपातितम् तत्किंमोक्षोनास्त्येवेत्यतआह त्वंप्रसन्नाकृतप्रसादा वैप्रसिद्धम् भुविजगतिमुक्तिहेतुः ४ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५

विद्याइति अंगानि ६ वेदाश्चत्वारो ४ मीमांस ११ न्यायविस्तरः १२ पुराणं १३ धर्मशास्त्रंच १४ विद्याह्येताश्चतुर्दश आयुर्वेदधनुर्वेदगंधर्वार्थशास्त्रैः स
हाष्टादशभेदाः अंशाः सकलाश्चतुः षष्टिकलोपताः पातिव्रत्यसौंदर्यतारुण्याद्युपेताः समस्ताःस्त्रियोपितवांशाः त्वयैकयैतत्पूरितम् अंतर्बहिश्च व्यास
म् एवंचत्वत्तः पृथग्भूतस्याभावात् अतस्तेस्तुत्येविषयेपरा परागौणीमुख्यान्वयाउक्तिस्तद्रूपास्तुतिः कातेइत्यर्थः यद्वाउक्तिरूपात्वमेवातः कातेस्तुतिः
५ पुनरपिस्तुतेरघटनामाह सर्वेति सर्वभूताविश्वात्मिकादेवी द्योतनशीलास्वर्गमुक्त्योः प्रकर्षेणदात्रीति यदात्वंस्तुतानदावास्तुतये परमाअधि

विद्याःसमस्तास्तवदेविभेदाःस्त्रियःसमस्ताःसकलाजगत्सु त्वयैकयापूरितमंबयैतत्कातेस्तुतिःस्तव्यपरापरोक्तिः ५ सर्वभू
तायदादेवीस्वर्गमुक्तिप्रदायिनी त्वंस्तुतास्तुतयेकावाभवंतुपरमोक्तयः ६ सर्वस्यबुद्धिरूपेणजनस्यहृदिसंस्थिते स्वर्गा
पवर्गदेदेविनारायणिनमोस्तुते ७ कलाकाष्ठादिरूपेणपरिणामप्रदायिनी विश्वस्योपरतौशक्तेनारायणिनमोस्तुते ८

काउक्तयःकाभवंतुनकापीत्यर्थः ६ तथाप्युपगम्याप्याह सर्वस्येति बुद्धिर्निश्चयात्मकंज्ञानंतद्वारैवस्वर्गापवर्गदात्वं नारायणस्यविष्णोः शक्तिः नारायणी-
तत्संबोधनेशक्त्सत्वप्रधानावैष्णावीत्वमितिध्वन्यते नेतुभ्यं यद्वानारस्यजीवसमूहस्यायतीस्थानभूतानद्भूतानत्साधनं ७ कलेति कलेतित्रिंशत् का
ष्ठाः अष्टादशनिमेषाः काष्ठाआदिनाक्षणमुहूर्तादयः परिणामोजननानामवस्थाविशेषः तेनाऽखंडकालरूपत्वं तदेवपुनराह विश्वस्योपरतौनाशेशक्ति

नानाशक्तिमतीत्यर्थः कालस्यैवजगद्भक्षकत्वात् ८ सर्वेति सर्वमंगलानांमगलरूपेशिवेकल्याणकर्त्रिशरण्येशरणार्हेत्र्यंबकेत्रिनेत्रे गौरिगौर वर्णे
अनेनशैवीत्वमस्याः ध्वनितम् ९ सृष्टीति आद्यार्धेनब्रह्मादीनांसृष्ट्यादिशक्तिः त्वमेवेत्युक्तम् सनातनिनित्येगुणानांमहदादीनांआश्रयभूतेअगुण
मये अविद्यमानगुणकृतविकारे १० शरणेति दीनाःसर्गादिक दुःखभाजः आर्ताः तस्करादिपीडिताः परायणस्तत्परः तदुपपादकमार्तिहरेइतिनिय

सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ९ सृष्टिस्थितिविनाशानांशक्तिभूतेसनात
नि गुणाश्रयेगुणमयेनारायणिनमोस्तुते १० शरणागतदीनार्तपरित्राणपरायणे सर्वस्यार्तिहरेदेविनारायणिनमोस्तुते ११
हंसयुक्तविमानस्थेब्रह्माणीरूपधारिणि कौशांभः क्षुरिकेदेविनारायणिनमोस्तुते १२ त्रिशूलचंद्राहिधरेमहावृषभवा
हिनि माहेश्वरीस्वरूपेणनारायणिनमोस्तुते १३ मयूरकुक्कुटवृतेमहाशक्तिधरेनघे कौमारीरूपसंस्थानेनारायणिनमो
स्तुते १४ शंखचक्रगदाशार्ङ्गगृहीतपरमायुधे प्रसीदवैष्णवीरूपेनारायणिनमोस्तुते १५

नः आर्तेः पीडायाः हंत्रीत्यर्थः
११ हंसेति हंसयुक्तविमानस्थितेब्रह्माणीरूपधारिके कुशंजलंतस्यायंकौशः कमंडलुः तदंभसः क्षुरिकेसेविके १२ त्रिशूलेतिमाहेश्वरीस्वरूपेणेतिपूर्वा
र्द्धेनान्वयि १३ मयूरेति मयूरकुक्कुटंतास्चिह्नंतेनवृतेकुक्कुटेः कुकुभेपिध्वजेनशिखिबर्हाणामुछ्रितेनसमावृतेतिहरिवंशोक्तेः अनघे अघरहितेकु
मारशक्तेरिवरूपंसंस्थानं अवयवसन्निवेशश्चयस्याः १४ शंखेति शंखादीनिगृहीतानिपरमायुधानियया १५ ७ ७ ७

१६ नृसिंहेति त्रैलोक्यत्राणायसम्यक्हितेलोपः १७ महावज्रे महत्वज्रंयस्याः १८ शिवेति हतंदैत्यानांमहाबलंययासा १९, २० हेलक्ष्मीः महावि-
द्या उपनिषत् श्रद्धाआस्तिक्यबुद्धिः पुष्टिसहितस्वधेमहती अविद्यासर्वावरणसमर्थोमहामोहः तद्रूपे २१ मेधेइति मेधाधारणावतीबुद्धिःसरस्वती



गृहीतोग्रमहाचक्रेदंष्ट्रोद्धृतवसुंधरे वराहरूपिणिशिवेनारायणिनमोस्तुते १६ नृसिंहरूपेणोग्रेणहंतुंदैत्यान्कृतोद्यमे
त्रैलोक्यत्राणसहितेनारायणिनमोस्तुते १७ किरीटिनिमहावज्रेसहस्रनयनोज्वले वृत्रप्राणहरेचैंद्रिनारायणिनमो
स्तुते १८ शिवदूतीस्वरूपेणहतदैत्यमहाबले घोररूपेमहारावेनारायणिनमोस्तुते १९ दंष्ट्राकरालवदनेशिरोमाला
विभूषणे चामुंडेमुंडमथनेनारायणिनमोस्तुते २० लक्ष्मीलज्जेमहाविद्येश्रद्धेपुष्टिस्वधेध्रुवे महारात्रिमहामायेनारा
यणिनमोस्तुते २१ मेधेसरस्वतिवरेभूतिबाभ्रवितामसि नियतेत्वंप्रसीदेशेनारायणिनमोस्तुते २२

वाग्देवता वरेश्रेष्ठेभूति सत्वप्रधानेछांदसोगुणाभावः अनेनसात्विकीत्वम्
बभ्रूरजोगुणः तद्युक्तेतामसि तमोगुणयुक्ते इदंमूलशक्त्यभिप्रायेणनियतिरुष्टं तद्रूपेईशेसमर्थे २२ ५ ५ ५ ५

सर्वेति देवीत्यस्यद्विरुक्तिः प्रसादनेत्राहीत्या र्षम् २३ सर्वभूतेभ्यः सर्वभूतविकारेभ्यः प्राणिभ्यश्चकात्यायनितदाश्रमभावे २४ ज्वालेति नोस्मान्भी
तेर्भयात् २५ हिनस्तीति अतः प्राणिमातावासुतानिवनोस्मान् पापेभ्यः पाहित्यर्थः अनितेः पचाद्यच् २६ असुरेति चर्चितोलिप्तः करंहस्तंउज्वलयति

सर्वस्वरूपेसर्वेशेसर्वशक्तिसमन्विते भयेभ्यस्त्राहिनोदेविदुर्गेदेविनमोस्तुते २३ एतत्तेवदनंसौम्यंलोचनत्रयभूषि
तम् पातुनःसर्वभूतेभ्यःकात्यायनिनमोस्तुते २४ ज्वालाकरालमत्युग्रमशेषासुरसूदनम् त्रिशूलंपातुनोभीते
र्भद्रकालिनमोस्तुते २५ हिनस्तिदैत्यतेजांसिस्वनेनापूर्ययाजगत् साघंटापातुनोदेविपापेभ्योनःसुतानिव २६
असुरासृग्वसापंकचर्चितस्तेकरोज्ज्वलः शुभायखड्गोभवतुचंडिकेत्वांनतावयम् २७ रोगानशेषानपहंसितुष्टारु
ष्टातुकामान्सकलानभीष्टान् त्वामाश्रितानांनविपन्नराणांत्वामाश्रिताह्याश्रयतांप्रयांति २८ एतत्कृतंयत्कदनंत्व
याद्यधर्मद्विषांदेविमहासुराणाम् रूपैरनेकैर्बहुधात्ममूर्तिंकृत्वांबिकेतत्प्रकरोतिकान्या २९

करैःकिरणै रुज्वलोवा २७

रोगानिति अभीष्टान् अपहंसीत्याकृष्यतइतियत् इष्टवियोगलक्षणाविपत्तिः यतस्त्वामाश्रिता अन्येषामाश्रयतांप्रयांति २८ एतदिति कदनं नाशः धर्म
द्विषोसुराः अद्यअधुना आत्ममूर्तिमेव अनेकैः रूपैः ब्रह्मण्यादिकाल्यादिलक्षणैः अभेदे तृतीयाबहुधाबहुप्रकारा अन्यात्वदितराकानकापीत्यर्थः २९

विद्यास्विति विद्यासुज्ञानेषुउपायभूतानियानि शास्त्रादीनि तेषुमन्वाद्युक्तेषुविवेकदीपेषुउपनिषत्सु आद्येषुवाक्येषु कर्मकांडपरवेदवाक्येषुचसत्स्वेवंममत्वगर्तेनदाश्रयेमहांधकारेसंसारे एनद्विश्वंत्वदन्याका अतीवविभ्रामयतिनकापीत्यर्थः ३० रक्षांसीति नागाःसर्पाः अत्रयत्रेत्यनुकृष्यतेदस्यवः चौराः दावोवनम् तथाब्धिमध्येयत्रौर्वाग्न्यादयः तत्रत्वमेवव्यापकत्वात् स्थितावि‍श्वंपरिपासीत्यन्वयः ३१ यतस्त्वंविश्वेश्वरि अतोविश्वंपरिपासि यतः त्वंविश्वा

विद्यासुशास्त्रेषुविवेकदीपेष्वाद्येषुवाक्येषुचकात्वदन्या ममत्वगर्तेतिमहांधकारेविभ्रामयत्येतदतीवविश्वम् ३० रक्षांसियत्रोग्रविषाश्चनागायत्रारयोदस्युबलानियत्र दावानलोयत्रतथाब्धिमध्येतत्रस्थितात्वंपरिपासिविश्वम् ३१ विश्वेश्वरीत्वंपरिपासिविश्वंविश्वात्मिकाधारयसीतिविश्वं विश्वेशवंद्याभवतीभवंतिविश्वाश्रयायेत्वयिभक्तिनम्राः ३२ देविप्रसीदपरिपालयनोरिभीतेर्नित्यंयथासुरवधादधुनैवसद्यः पापानिसर्वजगतांशमनंनयाशुउत्पातपाकजनितांश्चमहोपसर्गान् ३३

त्मिका अतस्त्वंतद्धारयसि यतोभवतीविश्वेशानांइंद्रब्रह्मादीनामपिस्तुत्या अतस्त्वयिभक्तिनम्रायेतेविश्वाश्रयाः भवंति ३२ देवीति हेदेविनोऽस्मान् सद्यः क्षणमात्रेण शत्रुभीतेः पालययथाधुनैवसंप्रत्येवासुरवधात् पालितवत्यसि तथेत्यर्थः सर्वजगतांपापानिआशुशीघ्रंप्रशमंनयउत्पातानांपाकः फलदानकालस्तेनजनितान्महोपसर्गान्मार्यादींश्चप्रशमंनयेति ३३ ७ ७ ७ ७ ७ ७

प्रणतानामिति ईड्येस्तव्ये ३४ देव्युवाच वरदेति यंवरम् अभीप्सितार्थंवृणुध्वं प्रार्थयध्वं ३५ देवाऊचुः सर्वाबाधेति सर्वाचासौबाधाचेत्यर्थः इदंवैरिविना
शनस्यविशेषणम् एवमेवशुंभादिनाशनवदेव ३६ देव्युवाच वैवस्वतेइति अंतरेमन्वंतरे अष्टाविंशतिमे अष्टाविंशतिसंख्याकेयोमडागमश्छांदसः यु
गेचतुर्युगे तत्रकलिद्वापरसंधावनयोरुत्पत्तिः ३७ नंदेति नंदगोपस्यएषामहालक्ष्म्यंशभूता नंदाभगवतीनामयाभविष्यतिनंदजा कनकोत्तमकां

प्रणतानांप्रसीदत्वंदेविविश्वार्तिहारिणि त्रैलोक्यवासिनामीड्येलोकानांवरदाभव ३४ देव्युवाच वरदाहंसुरगणावरं
यंमनसेच्छथ तंवृणुध्वंप्रयच्छामिजगतामुपकारकम् ३५ देवाऊचुः सर्वाबाधाप्रशमनंत्रैलोक्यस्याखिलेश्वरि ए
वमेवत्वयाकार्यमस्मद्वैरिविनाशनम् ३६ देव्युवाच वैवस्वतेंतरेप्राप्तेअष्टाविंशतिमेयुगे शुंभोनिशुंभश्चैवान्या
वुत्पत्स्येतेमहासुरौ ३७ नंदगोपगृहेजातायशोदागर्भसंभवा ततस्तौनाशयिष्यामिविंध्याचलनिवासिनी ३८ पुन
रप्यतिरौद्रेणरूपेणपृथिवीतले अवतीर्यहनिष्यामिवैप्रचित्तांश्चदानवान् ३९ भक्षयंत्याश्चतानुग्रान् वैप्रचित्तान्महासु
रान् रक्तादंताभविष्यंतिदाडिमीकुसुमोपमाः ४०

तिः सासुकांतिकनकांबरा कमलांकुशपाशाब्जैरलंकृतचतुर्भुजा इंदिराकमलालक्ष्मीः साश्रीरुक्मांबुजासनेति रहस्योक्तेः ३८ पुनरपीति इ
यमपिद्वापरेऽतीते तत्रैवचतुर्युगेऽवतीर्णेत्याहुः वैप्रचित्तान् विप्रचित्तवंशीयान् ३९ ४० ५ ५ ५

ततइति एषारक्तदंतिकाकाल्यंशभूता अत्रदंतेत्युपलक्षणम् केशायुधसर्वावयवेषुरक्तत्वमस्या अतएवास्यारक्तचामुंडात्वेनव्यवहारः अत्रसर्वत्रा
हमितिनिर्देशः परस्परमपिशाक्तानां अभेदाभिप्रायेण ४१ भूयश्चेति अनंभसिरूष्यादिजलभून्यायामपीत्यर्थः अयोनिजायथेदानींपार्वतीदे-
हाविर्भावएवमपिचेत्यर्थः ४२ ततइति यत्यस्मान्मुनीन्निरीक्षिष्यामितत्तस्मात् ४३ वैवस्वतमन्वंतरएवचत्वारिंशत्तमेयुगेशताक्षीशाकंभर्यव

ततोमांदेवताःस्वर्गेमर्त्यलोकेचमानवाः स्तुवंतोव्याहरिष्यंतिसततंरक्तदंतिकाम् ४१ भूयश्चशतवार्षिक्यामनावृष्ट्याम
नंभसि मुनिभिःसंस्मृताभूमौसंभविष्याम्ययोनिजा ४२ ततःशतेननेत्राणांनिरीक्षिष्यामियन्मुनीन् कीर्तयिष्यंतिमनु
जाःशताक्षीमितिमांततः ४३ ततोहमखिलंलोकमात्मदेहसमुद्भवैः भरिष्यामिसुराःशाकैरावृष्टेःप्राणधारकैः ४४
शाकंभरीतिविख्यातिंतदायास्याम्यहंभुवि तत्रैवचवधिष्यामिदुर्गमाख्यंमहासुरम् ४५

नारः तस्मिन्नेवांतरेशक्रचत्वारिं
शत्तमेयुगइतिलक्ष्मीतंत्रोक्तेः तत्रैवदुर्गमासुरवधः शाकंभरींस्तुवन्ध्यायन् शक्रसंपूजयन्नमन् अक्षय्यामश्नुतेभूतिमन्नंपानंभवांतरइतिचतत्रैव
४४ शाकंभरीति एषापार्वत्यंशाएवशाकंभरीनीलवर्णेत्युक्तेः दुर्गमनामाऽसुरः तत्रैवशाकंभर्यवतारएव शाकंभरीशताक्षीसासैवदुर्गाप्रकीर्तिता
उमागौरीसतीचंडीकालिकेशाचपार्वतीति पत्रमूलकरीराग्रमूलकांडाधिरूढकाः त्वक्पुष्पंकवचंचेति शाकंदशविधंस्मृतम् ४५ ६२

दुर्गेतिभीमंभयंकरं ४६ भक्षयिष्यामीत्यंतस्यपदद्वयविशिष्टम् ४७ भीमेति भीमापिनीलवर्णैवदंष्ट्रादशनभासुरा चंद्रहासंचडमरुंशिरःपात्रंचबिभ्रती एकवीराकालरात्रिर्निद्रातृष्णादुरत्ययेत्युक्तेरियंकाल्यंशाएव पंचाशत्तमेचतुर्युगेवैवस्वतमन्वंतरे एकभीमावतारइतिलक्ष्मीतंत्रे अरुणाख्योरुणोनाम ४८ तदेति भ्रामरं पाणिधृतभ्रमरं असंख्येयाःषट्पदाः यस्मिन्रूपेणतत् ४९ भ्रामरीति तेजोमंडलदुर्धर्षाभ्रामरीचित्रकांतिभृत् चित्रभ्र

दुर्गादेवीतिविख्यातंतन्मेनामभविष्यति पुनश्चाहंयदाभीमंरूपंकृत्वाहिमाचले ४६ रक्षांसिभक्षयिष्यामिमुनीनांत्राणकारणात् तदामांमुनयःसर्वेस्तोष्यंत्यानम्रमूर्तयः ४७ भीमादेवीतिविख्यातंतन्मेनामभविष्यति यदारुणाख्यस्त्रैलोक्येमहाबाधांकरिष्यति ४८ तदाहंभ्रामररूपंकृत्वासंख्येयषट्पदम् त्रैलोक्यस्यहितार्थायवधिष्यामिमहासुरम् ४९ भ्रामरीतिचमांलोकास्तदास्तोष्यंतिसर्वतः इत्थंयदायदाबाधादानवोत्थाभविष्यति ५० तदातदावतीर्याहंकरिष्याम्यरिसंक्षयम् ५१ इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीमाहात्म्येदेवैःकृतानारायणीस्तुतिर्नामएकादशोऽध्यायः ११ ७

मरपाणिःसामहामारीतिगीयते महामायामहाकालीमहामारीक्षुधातृषाइत्युक्तेरियमपिकाल्यंशाएवसर्वतः सर्वत्रवैवस्वतेंतरे एवषष्टितमेचतुर्युगेभ्रामर्यवतारइतिलक्ष्मीतंत्रे इत्थमित्याद्युत्तरान्वयि ५० तदेतिस्पष्टम् ५१ इतिशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतेसप्तशतीव्याख्यानेएकादशोऽध्यायः ११ ७ ७ ७ ७

स॰टी॰ ४५

देव्युवाच एभिरिति मधुकैटभवधादिलक्षणैरित्यर्थः सकलांऐहिकींपारलौकिकीम् समाहितोनन्यमनाः १ नदेवाह मधितिं २ श्रोष्यंति चात्पठिष्यंति अष्टम्यामित्या
दिसुखव्यकालकथनं ३ नतेषामिति दुष्कृतंपापंदरिद्रशब्दात् घञिदारिद्र्यम् ४ शत्रुतइति नशस्त्रेति संग्रामभीरुविषयम् ५ सदानित्यमुहियतः तत्
माहात्म्यंस्वस्तिकल्याणंनस्यायनंमार्गः६उपसर्गानिति माहात्म्यंकर्ता महामारीजनक्षयकरीदेवतातस्याः समुद्भवोयेषांतानुपसर्गानुपद्रवान् तथात्रि

अ॰ १२

देव्युवाच एभिःस्तवैश्चमांनित्यंस्तोष्यतेयःसमाहितः तस्याहंसकलांबाधांनाशयिष्याम्यसंशयम् १ मधुकैटभनाशंचमहि
षासुरघातनम् कीर्तयिष्यंतियेतद्वद्वधंशुंभनिशुंभयोः २ अष्टम्यांचचतुर्दश्यांनवम्यांचैकचेतसः श्रोष्यंतिचैवयेभक्त्या
मममाहात्म्यमुत्तमम् ३ नतेषांदुष्कृतंकिंचिद्दुष्कृतोत्थानचापदः नभविष्यतिदारिद्र्यंनचैवेष्टवियोजनम् ४ नशत्रुतोभयं
तस्यदस्युतोवानराजतः नशस्त्रानलतोयौघात्कदाचित्संभविष्यति ५ तस्मान्ममैतन्माहात्म्यंपठितव्यंसमाहितैः श्रोतव्यंच
सदाभक्त्यापरंस्वस्त्ययनंहितत् ६ उपसर्गानशेषांस्तुमहामारीसमुद्भवान् तथात्रिविधमुत्पातंमाहात्म्यंशमयेन्मम ७
यत्रैतत्पठ्यतेसम्यङ्नित्यमायतनेमम सदानतद्विमोक्ष्यामिसान्निध्यंतत्रमेस्थितम् ८

विधंव्याधिरागद्वेषादिरूपम् आध्या
त्मिकंभूतप्रेतादिजभयमत्रमाद्यधिभौतिकम् दैवकृतवज्रपातदारिद्र्याद्यधिदैविकंतद्रूपमुत्पातं अनिष्टंदिव्यंभौममांतरिक्षंचेतित्रिविधमुत्पातंच
७ यत्रेति यत्रायतनेगृहे मममत्संबंध्येतत्सम्यगर्थाऽवधारणपूर्वकं अस्खलितवर्णादिच ८ ५ ५ ५ ५

४५

बलीति बलिप्रदानंदेवतोद्देशेनपश्वाद्युपहारः पूजागंधादिनार्चनम् अग्निकार्यंदेवीदैवत्योहोमः महोत्सवः पुत्रजन्मविवाहादिउच्चार्येद्विजविषयम् ९ त
त्फलमाह जानतेति जानताविधिज्ञेन अजानतातदन्येनबलिसहितापूजां तथावेद्यावेद्यप्रकारेणमन्माहात्म्योदीरणादौसति यथाकथंचिदपिकृतमेतत् प्र
तीक्षिष्यामि अंगीकरिष्यामीत्यर्थः १० शरदितिशरत्काले आश्विनशुक्लप्रतिपदमारभ्यक्रियमाणादुर्गोत्सवरूपायाचवार्षिकी वर्षशब्दोवर्षादौलाक्ष

बलिप्रदानेपूजायामग्निकार्येमहोत्सवे सर्वममैतच्चरितमुच्चार्यंश्राव्यमेवच ९ जानताजानतावापिबलिपूजांतथाकृताम् प्रती
क्षिष्याम्यहंप्रीत्यावन्हिहोमंतथाकृतम् १० शरत्कालेमहापूजाक्रियतेयाचवार्षिकी तस्यांममैतन्माहात्म्यंश्रुत्वाभक्तिसमन्वि
तः ११ सर्वबाधाविनिर्मुक्तोधनधान्यसुतान्वितः मनुष्योमत्प्रसादेनभविष्यतिनसंशयः १२ श्रुत्वाममैतन्माहात्म्यंतथाचोत्प
त्तयःशुभाः पराक्रमंचयुद्धेषुजायतेनिर्भयःपुमान् १३ रिपवःसंक्षयंयांतिकल्याणंचोपपद्यते नंदतेचकुलंपुंसांमाहात्म्यं
ममशृण्वताम् १४ शांतिकर्मणिसर्वत्रतथादुःस्वप्नदर्शने ग्रहपीडासुचोग्रासुमाहात्म्यंशृणुयान्मम १५

णिकः तेनचैत्रशुक्लप्रतिपदमारभ्यक्रियमाणाइत्यर्थः ११ उत्पत्तयःप्रादुर्भावान् द्वितीयार्थेप्रथमा पराक्रमंचेति पूर्वान्वयियुद्धेष्वित्युपलक्षणम्
१३ शांतिकर्मउपसर्गादिनिवर्तकंकर्मतस्मिन् तत्स्थानइत्यर्थः अन्येसप्तम्यौविषयार्थे १५ ७ ७ ७ ७

नदेवविद्दणोति उपसर्गाइति दुःस्वप्नशब्दोनुफलेइतिनपुंसकत्वम् १६ बालग्रहाः पूतनाद्याः संघातभेदेमैत्रीविघट्टने १७ दुर्वृत्तानांदुष्टानांव्याघ्रसूक
राणाम् १८ पश्वित्यादिश्लोकद्वयमेकान्वयम् पशुर्बलिः अर्घोष्टांगः आपःक्षीरंकुशाग्राणिदध्यक्षततिलानिच यवाःसिद्धार्थकाश्चैवद्यष्टांगोर्घःप्र
कीर्तितः १९ विप्राणामिति प्रोक्षणीयैः पंचामृताभिषेकादिभिः एतैरन्यैर्विविधा भोगाः स्त्रगादयः प्रदानैः मदुद्देशेन विप्रेभ्योदीयमानैः वासो

उपसर्गाःशमंयांतिग्रहपीडाश्चदारुणाः दुःस्वप्नंचनृभिर्दृष्टंसुस्वप्नमुपजायते १६ बालग्रहाभिभूतानांबालानांशांतिकारकं
संघातभेदेचनृणांमैत्रीकरणमुत्तमम् १७ दुर्वृत्तानामशेषाणांबलहानिकरंपरम् रक्षोभूतपिशाचानांपठनादेवनाश
नम् १८ सर्वंममैतन्माहात्म्यंममसान्निधिकारकम् पशुपुष्पार्घधूपैश्चगंधदीपैस्तथोत्तमैः १९ विप्राणांभोजनैर्होमैः प्रो
क्षणीयैरहर्निशम् अन्यैश्चविविधैर्भोगैःप्रदानैर्वत्सरेणया २० प्रीतिर्मेक्रियतेसास्मिन्सकृत्सुचरितेश्रुते श्रुतंहरतिपापा
नितथारोग्यंप्रयच्छति २१ रक्षांकरोतिभूतेभ्योजन्मनांकीर्तनंमम युद्धेषुचरितंयन्मेदुष्टदैत्यनिबर्हणम् २२

लंकारादिभिः एतैरहर्निशंक्रियमाणैर्यावत्संवत्सरेणप्रीतिर्भवति २० सास्मिन्सुचरितेसकृच्छ्रुतइत्यर्थः श्रवणमुपलक्षणंश्रवणेधिकफलत्व
मितिकश्चित् श्रुतमित्याद्युत्तरान्वयि २१ ममजन्मनांकीर्तनंश्रुतंसदित्यर्थः युद्धेष्वित्युत्तरान्वयि २२ ९ ९ ९

तस्मिन्निति ब्रह्मर्षिभिः कृताः स्तुतयः तथापि ममतावर्त इत्यादयः ब्रह्मर्षिः सुमेधाः बहुवचनं पूजायां वस्तुतस्तु युष्माभिः स्तुतयोयाश्चेत्यनेन नारायणी
सूक्तम् तथा ब्रह्मणा ऋषिभिः सह यायुष्माभिः कृताः महिषान्तकरी सूक्तरूपा इत्यर्थः यथा तत्स्तुतौ ऋषीणामपि कर्तृत्वं तथा प्रागेव निरूपणात् कृता इति-
च हस्वार्थ इत्यर्थकम् लक्ष्मीतंत्रैकवाक्यत्वादित्यवधेयम् एवं चैतानि सर्वाणि स्तोत्राण्यकर्तृकादीनि बोध्यम् २३ ब्रह्मणेति त्वंस्वाहेत्यादि रात्रिसू

तस्मिन्कृते वैरिकृतं भयं पुंसां न जायते युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः २३ ब्रह्मणा च कृतास्तास्तु प्रयच्छन्ति शु
भां मतिम् अरण्ये प्रांतरे वापि दावाग्निपरिवारितः २४ दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः सिंहव्याघ्रानुयातो वा वं
ने वा वनहस्तिभिः २५ राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बंधगतोपि वा आघूर्णितो वा वातेन स्थितः पोते महार्णवे २६ पतत्सु चापि
शस्त्रेषु संग्रामे भृशदारुणे सर्वबाधासु घोरासु वेदनाभ्यर्दितोपि वा २७

कृ रूपाः शुभां मोक्षाभ्युदयसाधनीं प्रयच्छन्ति ददति अरण्य इत्यादि श्लोकचतुष्टयमेकान्वयि प्रांतरे दूरशून्यमार्गे अरण्य इत्यस्य दावाग्नीत्यादि
नान्वयः प्रांतर इत्यस्य दस्युभिरित्यादिनान्वयः २४ वनहस्तिभिरित्यस्य वृतो वेति शेषः २५ राज्ञेति क्रुद्धेन राज्ञान्वबध्य इत्याज्ञप्त इत्यन्वयः सर्वत्र
वा समुच्चये महार्णवे पोते स्थितो वातेनाघूर्णित आकुलितश्च २६ पतत्स्विति सर्वबाधासु महापीडासु वेदनया दुःखेनाभ्यर्दितश्च २७ ६९

स्मरन्निति मुच्यतेतिकर्मकर्तरिलङ् संकटंदुःखंउत्तरार्द्धमुत्तरान्वयि २८ दूरादेवेति ममचरितंस्मरतः ममप्रभावात् दूरात्पलायंतइत्यन्वयः उत्तरार्द्धे स्यऋषिरुवाचेत्यादिः चंडोदारुणः २९ पश्यतामिति अनादरेषष्ठी निरातंकाः निर्भयाः ३० दैत्याः शेषादैत्याः ३१ आययुः प्राविशन् ३२ एवमिति संभूयदृश्यशरीरात्प्रादुर्भूय अंतरधीयतेतिकर्मकर्तरिलङ् ३३ दृष्टंमोहकारणमुपसंहरति तयाइति प्रसूयतेजनयति अथार्चिताफलमुद्दिश्यकृ

स्मरन्ममैतच्चरितंनरोमुच्येतसंकटात् ममप्रभावात्सिंहाद्याद्दस्यवोवैरिणस्तथा २८ दूरादेवपलायंतेस्मरतश्चरितंमम ऋषिरुवाच इत्युक्त्वासाभगवतीचंडिकाचंडविक्रमा २९ पश्यतामेवदेवानांतत्रैवांतरधीयत तेपिदेवानिरातंकाःस्वा धिकारान्यथापुरा ३० यज्ञभागभुजःसर्वेचक्रुर्विनिहतारयः दैत्याश्चदेव्यानिहतेशुंभेदेवरिपौयुधि ३१ जगद्विध्वंसि नितस्मिन्महोग्रेतुलविक्रमे निशुंभेचमहावीर्येशेषाःपातालमाययुः ३२ एवंभगवतीदेवीसानित्यापिपुनःपुनः संभू यकुरुतेभूपजगतःपरिपालनम् ३३ तयैतन्मोह्यतेविश्वंसैवविश्वंप्रसूयते सायाचितात्चविज्ञानंतुष्टाऋद्धिंप्रयच्छति ३४ व्याप्तंतयैतत्सकलंब्रह्मांडंमनुजेश्वर महाकाल्यामहाकालेमहामारीस्वरूपया ३५

नभक्तिर्विज्ञानमात्मतत्वज्ञानंयच्छ ति तुष्टाफलोद्देशेनक्रियमाणकर्मणाऋद्धिंप्रयच्छति संहितायाअविवक्षितत्वान्नसंधिः ३४ व्याप्तमितिमहतोब्रह्मादीनपिकलयति अधिका रेषुवर्तयतिसामहाधिकालीतयामहाकालेप्रलयेमहामारीसंहारक्रियातद्रूपयातयैवतत्सकलंव्याप्तमित्यन्वयः ३५ ६ ६

सैवेति कालेप्रलये महामारीसंहारशक्तिः सृष्टिः सर्गशक्तिः अजाजन्महीना कालेस्थिति कालेसनातनीनाशहीना ३६ भवकालेसंपत्समयेवृद्धिप्रदेति लक्ष्मीविशेषणम् अभावेप्यापत्काले ३७ पुष्पैर्धूपदीपगंधाद्यैः संपूजितेत्यर्थः ३८ इतिशिवभ० द्वादशोऽध्यायः १२ ऋषिरुवाच एतदि

सैवकालेमहामारीसैवसृष्टिर्भवत्यजा स्थितिंकरोतिभूतानांसैवकालेसनातनी ३६ भवकालेनृणांसैवलक्ष्मीर्वृद्धिप्रदागृहे सैवाभावेतथालक्ष्मीर्विनाशायोपजायते ३७ स्तुतासंपूजितापुष्पैर्धूपगंधादिभिस्तथा ददातिवित्तंपुत्रांश्चमतिंधर्मेग तिंशुभाम् ३८ इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीमाहात्म्येदेवीवाक्यं नामद्वादशोऽध्यायः १२
ऋषिरुवाच एतत्तेकथितंभूपदेवीमाहात्म्यमुत्तमम् एवंप्रभावासादेवीययेदंधार्यतेजगत् १ विद्यातथैवक्रियतेभगव द्विष्णुमायया तयात्वमेषवैश्यश्चतथैवान्येविवेकिनः २ मोह्यंतेमोहिताश्चैवमोहमेष्यंतिचापरे तामुपैहिमहाराजशर णंपरमेश्वरीम् ३ आराधितासैवनृणांभोगस्वर्गापवर्गदा

ति एवमुक्तप्रकारेणधार्यतइतिसृष्टिप्रलययोरुपलक्षणम् हेभूपेतिसु रथविशेषणम् १ विद्यातत्त्वज्ञानं तथैवेतिसमुच्चये तयादेव्यात्वंसुरथः एषवैश्यः समाधिः उत्तरार्द्धमुत्तरान्वयि तथैवान्येअन्येचेत्यर्थः विवेकिनः अधिगतलोकशास्त्राः २ मोह्यंतइति मोहोमिथ्याज्ञानम् उपैहीति वृद्धिश्छांदसी ३ आराधितेति सैवेत्यनेनसर्वत्रफलदात्रीयमेवेतिसूचितम् भोगःऐहिकः

३ मार्कंडेयउवाचइतीति ४ प्रणिपत्येति शंसितव्रतम् तीव्रव्रतम् निर्विण्णोदुःखाकुलः ममत्वंस्वीयत्वाध्यवसायः ५ जगामेति सराजावैश्यश्चेत्यर्थः
एवमग्रेपि ६ देवीसूक्तंऋग्वेदप्रसिद्धमित्येके वस्तुतोदेवीसूक्तंनमोदेव्याइत्यादिकंपंचमाध्यायस्थस्तुतिरूपं तत्रसर्वदेवतायाः कूटस्थायाः महा
लक्ष्म्याः स्तोत्रंशुंभादिवधार्थिभिर्दृष्टंसर्वक्लेशपरिहारैश्वर्यादिफलकंतत्कामाभ्यांताभ्यांजसं अनुपदश्रुतत्वात् बुद्धिसन्निहितत्वाच्चेदमेवदेवीसू-

मार्कंडेयउवाच इतितस्यवचः श्रुत्वासुरथः सनराधिपः ४ प्रणिपत्यमहाभागंतमृषिंशंसितव्रतम् निर्विण्णोतिममत्वे
नराज्यापहरणेनच ५ जगामसद्यस्तपसेसचवैश्योमहामुने संदर्शनार्थमंबायानदीपुलिनमास्थितः ६ सचवैश्यस्त
पस्तेपेदेवीसूक्तंपरंजपन् तौतस्मिन्पुलिनेदेव्याः कृत्वामूर्तिंमहीमयीम् ७ अर्हणांचक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः
निराहारौयताहारौतन्मनस्कौसमाहितौ ८ ददतुस्तौबलिंचैवनिजगात्रासृगुक्षितम्

क्तंदेवीपदेनचगृहीतुमुचितंलक्ष्मीतंत्रसंमतश्चायमर्थः इतिप्रागेवनिरूपितमित्यपरे प्राणाधः संस्थितंबीजंव्योमबीजंहुताशनः त्रिकोणबिंदुनादाढ्यं
प्रणवादिनमोंतकम् अंबिकासिद्धिदंज्ञेयंदेवीसूक्तंपरंस्मृतमितिक्वचित्पठ्यते ७ अर्हणांपूजां अग्नितर्पणंहोमः पुष्पधूपौगंधदीपाद्युपलक्षकौ आ
दौयताहारौ अल्पाहारौततोनिराहारौ अनेनहठयोगः सूचितः तन्मनस्कौदेवीमनस्कौ समाहितौत्यक्तबाह्यचेष्टौ ८ ९ ९

तौबलिंचपशकूष्मांडाद्युपहारंददतुरेवेत्यस्यराजेत्यादि राजैवनिजरुधिरसिक्तंएतेनवैश्यस्यतत्वज्ञानेच्छयासात्विकत्वेनकथंराजसपूजायांप्रवृत्तिरित्यपास्तम् राजसपूजाधिकारत्वेनततस्तस्यसात्विकफलेबाधकाभावाच्च ब्राह्मणस्यसात्विकपूजयाराजसफलवत् यतात्मनोर्जितचित्तयोः ९ प्रत्यक्षामितिक्रियाविशेषणम् देव्युवाच यदित्युत्तरार्धम् कुलनंदनेतिवैश्यसंबोधनम् ज्ञानार्थित्वेनप्रशस्तत्वात् १० मत्तइति प्राप्यतांस्वीक्रियताम्

एवंसमाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ९ परितुष्टाजगद्धात्रीप्रत्यक्षंप्राहचंडिका देव्युवाच यत्प्रार्थ्यतेत्वयाभूपत्वयाचकुलनंदन १० मत्तस्तत्प्राप्यतांसर्वंपरितुष्टाददामितत् मार्कंडेयउवाच ततोवव्रेनृपोराज्यमविभ्रंश्यन्यजन्मनि ११ अत्रापिचनिजंराज्यंहतशत्रुबलंबलात् सोपिवैश्यस्ततोज्ञानंवव्रेनिर्विण्णमानसः १२ ममेत्यहमितिप्राज्ञःसंगविच्युतिकारकम् देव्युवाच स्वल्पैरहोभिर्नृपतेस्वंराज्यंप्राप्स्यतेभवान् १३ हत्वारिपूनस्खलितंनवतत्रभविष्यति

तत्प्रार्थ्यमानं मार्कंडेयउवाच ततइत्युत्तरार्धम् अविभ्रंशिचिरस्थायि ११ अत्रापिचेति अत्राथास्मिन्जन्मन्यपिबलाद्धतशत्रुबलमितिराज्यविशेषणं ज्ञानंतत्वज्ञानंनिर्विण्णमानसः संसाराद्विरक्तमानसः १२ ममेत्यहमिति चयःसंगस्तस्माद्विच्युतिस्तन्नाशस्तत्करमिति ज्ञानविशेषणं समासोनछांदसः प्राज्ञत्वंमुक्तीच्छयानिबुद्धिमत्वाच्चस्वल्पैरिति स्वंराज्यमित्यसमस्तम् १३ हत्वेति तत्रराज्येतवास्खलितमस्खलनं भविष्यति उत्तरार्द्धमुत्तरान्वयि १४

सावर्णिकइति यद्वाचकंनामतदुपलक्षितोमनुरित्यर्थः वैश्येत्याद्युत्तरान्वयि अस्मत्तइतिबहुवचनंस्वस्यसर्वात्म्यद्योतकं १५ तमिति संसिद्ध्यैमुक्तये
तादर्थ्येचतुर्थी ज्ञानंब्रह्मज्ञानम् मार्कंडेयउवाच इतीति १६ बभूवेति देव्याइत्यपादानेपंचमी सूर्यादिति सावर्णिर्भवितामनुरित्यस्यपुनरावृत्तिरा
चारान् वक्ष्यमाणकात्यायनीतंत्राच्च अंत्येमनुरित्यनेनसावर्णिरित्यारभ्यसावर्णिर्भवितामनुरित्यंतोयंमहामालामंत्रइतिसूचयतीति तदुक्तंलक्ष्मी

मृतश्चभूयःसंप्राप्यजन्मदेवाद्विवस्वतः १४ सावर्णिकोमनुर्नामभवान्भुविभविष्यति वैश्यवर्यत्वयायश्चवरोस्मत्तोभिवां
छितः १५ तंप्रयच्छामिसंसिद्ध्यैतवज्ञानंभविष्यति मार्कंडेयउवाच इतिदत्वातयोर्देवीयथाभिलषितंवरम् १६ बभूवां
तर्हितासद्योभक्त्यानाभ्यामभिष्टुता एवंदेव्यावरंलब्ध्वासुरथःक्षत्रियर्षभः सूर्याज्जन्मसमासाद्यसावर्णिर्भवितामनुः १७
इतिश्रीमार्कंडेयपुराणेसावर्णिकेमन्वंतरेदेवीमाहात्म्येसुरथवैश्ययोर्वरप्रदानंनामत्रयोदशोऽध्यायः १३

तंत्रेसम्यक्हृदिस्थितासेयंजन्मकर्मावलिस्तुतिः एतांद्विजमुखात्ज्ञात्वाअधीयानोनरःसदा विधूयनिखिलांमायांसम्यक्ज्ञानंसमश्नुते सर्वं
संपदआप्नोतिधुनोतिसकलापदः इतिसर्वेष्टसिद्धिः १७ इतिकालोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतेसप्तशतीव्याख्यानेत्रयोदशोऽध्या
यः १३ श्रीर्जयतु सामविधिब्राह्मणेथयः कामयेतेपुनर्नप्रजायेयमित्यपुनर्भवमधिकृत्यतदनुसंधेयोस्यामंत्रउक्तः रात्रिंप्रपद्येपुनर्भूंमयोभूं कन्यां

शिखंडिनींपाशहस्तांयुवतींकुमारिणीमादित्यः श्रीचक्षुषेवांतः प्राणायसोमोगंधायापः स्नेहायमनोमनुज्ञायपृथिव्यैशरीरमिति अस्यरात्रौजपमात्रा
त्सिद्धिः अस्यफलंमरणकालज्ञानंपरमफलंतुमोक्षइति तंत्रैवोक्तम् अयंचदेवीविषयोमंत्रः कन्यांकुमारिणीमित्यत्रप्रत्यभिज्ञानात् रात्रिंतद्रूपामूअ
स्यास्तनुस्तमोद्धारानिशादिवसनाशिनीतिदेवीमुपक्रम्यहरिवंशोक्तेः पुनर्भूः असुरवधार्थंनानावतारग्रहात् अतएवमयोभूः प्राणिनांसुखदात्री
कन्याअजातपुंस्पर्शरतिरधृष्याचातिसुंदरीतिशिवोक्तेः शिखंडिनीमयूरपिच्छभूषणामयूरकलापध्वजाच्च भूषणैस्तुमयूराणामंगदाद्यैश्चभा-
स्वरा ध्वजेनशिखिबर्हाणामुच्छ्रितेनसमावृतेतिहरिवंशोक्तेः पाशहस्ताअसुरबंधनार्थं तथायुवतिः नित्यंबाल्यवार्धकावस्थारहिता कंसमो
हनावतारेक्षणंशैशवाभिनयेपितदानीमेवयौवनाविष्करणोक्तेः एवंभूतायाः रात्र्यभिमानिदेवतायाः प्रभावादादित्यश्चक्षुषेचक्षुरक्षितंभव
तुयत्नवान्भवत्वितिक्रमेणार्थः मनस्तदधिष्ठात्रीदेवता अनुज्ञायअनुज्ञामानंरक्षितुंभवतु पृथिव्यैशरीरमित्यस्याविभक्तिपरिणामेनपृथिवी
शरीरायेत्यर्थः अथास्यसप्तशतीत्वव्यवहारप्रयोजकसप्तशतहोममंत्रविभागोदर्शितः कात्यायनीतंत्रे मार्कंडेयऋषिः प्रोक्तःप्रथमः श्लोकतः
प्रिये व्योमादिवर्णसंभूतोद्वितीयःस्वरसंयुतः व्योमाद्कारस्तस्यादिः सकारःद्वितीयस्वरआकारइत्यर्थः नृपांनंप्रवदेन्मंत्राः सर्वेचाष्टादश-
प्रिये वैश्योवाचततः श्लोकाव्योमाद्याःपंचमंत्रकाः व्योमाद्यआद्योयेषामिति मृगनयनावत्समासः नृपस्योक्तिमंतिवर्णोद्वादशस्वरसंयुतः
मांतवर्णोयः सचद्वादशस्वरेणएकारेणयुक्तआदिभूतः इत्यर्थः सकारोबिंदुसंयुक्तश्चांतेस्तोमनुरीदृशौ २५ मनुर्मन्त्र इत्यर्थः वैश्योवा
चपुनर्देविस्वरैकादशआदितः स्वरैकादशैः एकारः वन्हिबीजंबिंदुयुक्तमंतेस्यान्मनुपंचकम् वन्हिबीजंरमिति २० मार्कंडेयऋषिप्रोक्तंमंत्र

त्रयमुदाहृतम् तादिवर्णंच भुवनस्वरयुग्वारुणंपरम् भुवनस्वरऔंतद्युक्तंवारुणंवौंइति राजोवाचेतिषपमंत्राभादितांताः शृभानने अथोवाचऋषिं
ज्ञानमस्तीत्यादिस्फुरेश्वरि सर्वेश्वरेश्वरीचांतेमंत्रावैद्वादशस्फुटाः राजोवाचेतिभगवानादिरंतेविदांवरः मंत्रत्रयमिदंख्याततनोऋषिरुवाचह नित्यै
वसायदाचादौप्रभुरंतेष्टमंत्रकः ब्रह्मोवाचततश्चोक्त्वात्वंस्वाहादिमहास्फुरैः अंतेपंचदशैतेस्युर्मंत्राश्चपरमेश्वरि एवंस्तुत्यादिऋष्युक्तिर्वांतमंत्रा
श्चसप्तवै ततोभगवदुक्तिस्तुभवेदादिमनुद्वयम् वंचितेतिचऋष्युक्तिर्मंत्रौद्वौपरमेश्वरि ऋष्युक्तिश्चतथेत्यादिमंत्रद्वयमुदाहृतम् सर्वेलोका
स्त्विहाध्यायेष्टयुक्सप्ततिचक्रमात् मध्येचतुर्विंशतिका अर्धमंत्राः प्रकीर्तिताः सर्वाश्चाहुतयोज्ञेयाश्चतुरुत्तरकंशतम् उवाचांतास्तत्रबोध्यामंत्रा-
भुवनसंख्यकाः १४ इतिप्रथमचरितनिर्णयोनामविंशतिमंपटलम् २० ईश्वरउवाच द्वितीयेऋष्युवाचेतिनवषष्ट्याहुतिःक्रमात् ततस्तृतीये
ध्यायेतुऋषिरुवाचदेशिके पंचत्रिंशच्चवैमंत्राः श्लोकाज्ञेयावरानने देव्युवाचेतिमंत्रांतेमंत्रश्लोकोमतःप्रिये ऋषिरुक्तिःपुनःश्लोकाः पंचमंत्राः
सनातनाः एवमाहुतयस्तत्रचत्वारिंशच्चतुर्युताः चतुर्थेक्रमतोदेविऋष्युक्तिःषड्चविंशतिः पुनस्तथैवऋष्युक्तिःश्लोकौद्वौमंत्ररूपिणौ एवं
स्तुतेतिमंत्रोयमतिगुह्यंस्तपाचनम् देव्युवाचेतिव्रियतांमंत्रोयंषोडशाक्षरः देवाऊचुस्ततश्चोक्त्वाभगवत्याकृतंवदेत् मंत्रोयंशतवर्णाद्यो
द्वादशोत्तरयुक्पुनः ततोऋषिरुवाचेतिइतिप्रसादितेतिवै चतुःसंख्यास्ततेश्लोकामंत्रास्तावंतएवहि श्लोकाश्चतुर्थेध्यायेतुषड्विं
शत्परमेश्वरि अर्धमंत्रद्वयेनैवचत्वारिंशद्वियुक्पुनः एवंमध्यचरित्रस्यपंचाशच्चशतोत्तरम् तथापंचायुतंमंत्रामहालक्ष्म्याविभेदतः
इतिमध्यमचरित्रमंत्रनिर्णयएकविंशतिमंपटलम् २१ ऋषिरुवाचेतिपुराविष्णुमायांप्रतुष्टुवुः षण्मंत्राःश्लोकरूपास्तेदेवाऊचुस्ततःपरम्

नमोदेव्यादिनश्लोकास्त्रिंशद्विनम्रमूर्तिभिः विष्णुमायादितोभ्रांतिरूपातेत्रीणिषष्टियुक् अवतारेपृथङ्मंत्रास्तेषांत्रिषष्टिराहुतिः चितिरूपेणमं
त्रेणआहुतित्रयमुच्चरेत् एवंमंत्राअशीतिस्तेऋषिरुवाचइत्यथ एवंस्तवादियुक्तानांत्वयाकस्मान्नगृह्यते मंत्राःसप्तदशैनेतुऋष्युक्तिश्चेतिनिशाम्य
वै इत्यादिभिनयैर्मंत्रैः शङ्भेदाःप्रकीर्तिताः अथदूतउवाचेतिदेविदैत्येश्वरःपरम् इत्यादिनवमंत्राश्चपुनाऋषिरुवाचह इत्युक्तेत्यादिमंत्रेणे
हैकेनचसरस्वति देव्युवाचेतिश्लोकास्तुचत्वारोमंत्रभेदतः दूतोवाक्येतिपुनरप्यवलिप्तासिइत्यथ मंत्राश्चत्वारिविज्ञेयादेव्युवाचततःपरम् ए
वमेतद्बलीशुंभोसचयुक्तंकरोतुयत् इतिमंत्रद्वयंश्लोकावंगमंत्राश्चतेनव एकोनत्रिंशच्चशतादधिकामंत्ररूपकाः इतिपंचमोऽध्यायः ५
ऋषिरुवाचेत्याकर्ण्यश्लोकाश्चत्वारिईरिताः पुनाऋषिरुवाचेतितेनाज्ञप्तस्ततःपरम् मंत्रत्रयमिदंप्रोक्तंदेव्युवाचेतिवैतदा दैत्येश्वरेणप्रहि
तोएकमंत्रःप्रकीर्तितः ततश्चऋषिरुवाचइत्युक्तःसोभ्यधावत इत्यादि द्वादशश्लोकभेदास्तादेवताहुतयःक्रमात् इतिषष्ठोऽध्यायः ६
ऋष्युक्तिराज्ञइत्यादित्रयोविंशतिमातरः ऋषिरुवाचतावानीतौमातृभेदद्वयंक्रमात् सप्तविंशत्यत्रदैविभवंत्याहुतयःक्रमात् अत्राध्यायद्वये
देवीधूम्राक्षीतुप्रकीर्तिता इतिसप्तमोऽध्यायः ७ ऋषिश्चंडेचनिहतइत्यध्यायवसानकम् त्रिषष्ट्याहुतयःप्रोक्ताएकाअर्द्धाहुतिःक्रमात् रक्ता-
क्षीदेवताअष्टौमहाशक्त्यःप्रकीर्तिताः इत्यष्टमोऽध्यायः ८ राजाविचित्रमित्यादिश्लोकद्वयमुदाहृतम् ऋषिश्चकारकोपंहिइत्यादिश्लोकरू
पतः एकचत्वारिंशदितिआहुतिर्नवमेशुंभे इतिनवमोऽध्यायः९ ऋषिर्निशुंभंनिहतमित्यादिद्वयमंत्रकम् ततोदेवीतिमंत्रौद्वौएकैवाह
मनुत्तमौ पुनर्देव्येकमंत्रेणव्यक्तमंत्राउदीरिताः ऋषिस्ततःप्रवहतेसार्द्धद्वाविंशतित्रयम् द्वात्रिंशन्मनवस्तत्रएकोह्यर्द्धमनुर्मतः दशमेसिं

हमासीनाशूलपाशविधारिणी मुरव्याचतुर्भुजाबाणचापहस्ताशुभेक्षणा इतिदशमोऽध्यायः १० इतिद्वाविंशतितमंपटलम् २२ ऋषिःसुमेधावि
रव्यातःप्राक्तोदेव्याहतेशुभे चतुस्त्रिंशत्तथाश्लोकामंत्रास्तत्संरव्यकाश्चये ततोदेव्येकमंत्रेणवरदाहंसुरेश्वरि देवाऊचुस्तथासर्वबाधाप्रशमनंतथा
श्लोकेनैकेनदेवेशिदेव्युवाचततःपरम् वैवस्वतेंतरेप्रासेत्यादिश्लोकाश्चतुर्दश सार्द्धासर्वाहुतिर्देविपंचाशत्संचसंयुता वैष्णवीदेवताद्यत्रमहागरु
डवाहिनी इत्येकादशोऽध्यायः ११ देव्युवाचेतिततएभिस्तवैश्चमांसदा दूरेत्यर्द्धेनसहिताअष्टाविंशतिरूपकाः ततश्चऋषिरुवाचइत्युक्त्वा
श्लोकमादितः अर्धयुड्नवभिःश्लोकैर्मंत्रास्तत्संरव्यकामताः एवंतुद्वादशेध्यायेएकचत्वारिंशदाहुतिः इतिद्वादशोऽध्यायः १२ ततस्त्रयोद
शेध्यायेऋषिरुवाचइत्यथ एतत्तेकथितंभूपेत्यादिसार्द्धत्रयंमनुः मनुचतुष्टयमित्यर्थः मार्कंडेयउवाचेतिइतितस्यवचोदितः श्लोकषट्कं
ततोदेविउवाचपरमेश्वरी यत्प्रार्थ्यतेत्वयाभूपश्लोकेनैकेनतोषकृत् मार्कंडेयउवाचेतिततोवक्ष्येमनुत्रयम् देव्युवाचपुनश्चैवस्वल्पश्लोक
त्रयेणवै अर्धानामेवमंत्रत्वाद्भवत्यत्रषडाहुतिः षट्संरव्याहुतिरित्यर्थः ततोमार्कंडेयइतिइतिदत्वातयोरिति द्वौमंत्रौपुनरुच्चार्यसावर्णिर्भवि
तामनुः एकोनत्रिंशत्संरव्याकाहुतिरत्रविधीयते एवंत्रयोदशेध्यायेहोमतर्पणकर्मणि शतानिससप्तसंरव्यानितवप्रोक्तानिशैलजे सकारादि
नकारांतोमनुःपरमदुर्लभः ससंप्रदायविधिनाज्ञातव्योममवल्लभे अन्यथाविकलोमंत्रःसत्यंसत्यंमयोदितम् तत्रमंत्रेस्वाहांताएतेमंत्रान
मोंताः तर्पणेतर्पयाम्यंताः इतित्रयोविंशतिमंपटलम् २३ केचित्तुमंत्रंपठित्वाततस्तदध्यायदेवतायैनमइतिपूजनमित्याहुः एवंहोमा
शक्तौजयंतीमंत्रेणैवहोमउक्तोन्यत्रपूजाचेतिदिक् कात्यायनीतंत्रोक्तमंत्रविभागएवाभियुक्तैःस्पष्टीकृत्यदर्शितस्तथाहि अष्टसप्तत्युत्तरा-

पांश्लोकानांशतपंचकम् प्रोक्तंसप्तशतीस्तोत्रंतत्सप्तशतसंख्यया विभज्यजुहुयान्मंत्रमितिकात्यायनीमतम् मार्कंडेयउवाचैकःसावर्णाद्यास्त
नःपरम् २ श्लोकमंत्राःसप्तदशअर्धश्लोकात्मकस्ततः एकोनविंशदेवंस्युर्वैश्योक्तिर्विंशतिस्तथा ३ पुनरर्द्धंपुनःश्लोकत्रयमर्धंपुनर्भवे
त् पंचविंशतिरेवंस्याद्राजाषड्विंशतिस्ततः ४ अर्धश्लोकात्मकौमंत्रौमंत्रसंख्याप्रकीर्तिता ५ पुनरर्द्धंपुनःश्लोकत्रयमर्द्धंपुनर्भवेत्
मार्कंडेयःपुनश्चार्द्धश्लोकःश्लोकात्मकःपुनः ६ अर्धश्लोकात्मकोमंत्रोराजार्द्धश्लोकमंत्रकः मंत्राश्चत्वारिंशदेवंश्लोकमंत्रचतुष्टयम् ७
पुनरर्द्धमृषिश्चार्द्धश्लोकमंत्राःपुनर्दश पुनरर्धःपुनाराजाएकोनाषष्टिरुच्यते ८ पुनरर्द्धंपुनःश्लोकःपुनरर्द्धंपुनर्ऋषिः पुनरर्द्धंपुनःश्लोकाः
षण्मंत्राःपुनरर्द्धकम् ९ निद्रांभगवतींविष्णोरतुलांतेजसःप्रभुः इत्येवपाठोमंत्राणामेकसप्ततिरुच्यते १० ब्रह्मार्द्धश्लोकमंत्रोथश्लोकमंत्रा
स्त्रयोदश अर्द्धश्लोकऋषिश्चार्द्धश्लोकश्लोकास्तुपंचवै ११ पुनरर्धंतुमंत्राणांसप्तपंचनवतिःस्मृता भगवानर्धमंत्रेर्द्धऋषिश्लोकार्द्धकंपुनः
१२ श्लोकःपुनर्ऋषिःश्लोकद्वयमंत्रद्वयंभवेत् श्लोकानामष्टसप्तत्याचतुर्भिरधिकंशतं १३ अध्यायादावेवऋषिरुवाचेतिसकृन्मनुः अ
ष्टषष्टिमिताःश्लोकास्तावंतोमनवःस्मृताः १४ एकोनसप्ततिःसर्वेध्यायेमंत्राद्वितीयके आदावृषिरुवाचैकःपंचविंशस्ततःपरम् १५ निहन्य
मानाद्याःश्लोकामुखरागाकुलाक्षरम् इत्यंतादेव्युवाचैकोगर्जगर्जेतिचापरः १६ श्लोकाऋषिरुवाचेतिपुनश्चश्लोकपंचकम् चतुश्चत्वा
रिंशदेवंसर्वेमंत्रास्तृतीयके १७ भगवत्याकृतंसर्वमित्यर्द्धश्लोकमंत्रकः यदयंनिहतःश्लोकद्वयेदेवीततःपरम् १८ ऋषिश्लोकास्तु
चत्वारोमनवःपरिकीर्तिताः षट्त्रिंशच्छ्लोककेध्यायेचत्वारिंशद्वयाधिकं १९ षट्सप्ततिश्लोकयुक्तेध्यायेमंत्रास्तुपंचमे एकोनत्रिं

शदधिकंशतंकात्यायनीमतम् २० एको ऋषिरुवाचेतिपुराश्तुंभादयश्चषट् श्लोकमंत्रास्ततोदेवाऊचुश्चैवाष्टमोमनुः २१ नमोदेव्यादिकाःश्लो
काः पंचमंत्राःप्रकीर्तिताः त्रयोदशैवंमंत्रास्तुयादेवीत्याद्योपिच २२ एकविंशतिकाःश्लोकाभ्रांत्यंतास्तेषुमंत्रकाः प्रतिश्लोकंत्रयोमंत्रा
ज्ञेयाःसर्वेत्रिषष्टिकाः २३ पुनःश्लोकात्मकोमंत्रस्त्रिमंत्रःश्लोककःपुनः त्रयोविंशच्छ्लोककेषुमंत्रावैसप्तषष्टिकाः २४ यादेवी-
सर्वभूतेषुविष्णुमायेतिशब्दिता नमस्तस्यैइतिप्रोक्तोविंशत्यक्षरकोमनुः २५ नमस्तस्यैइतिप्रोक्तोद्वितीयश्चतुरक्षरः
अष्टाक्षरस्तृतीयोपिनमस्तस्यैनमोनमः २६ एवंद्वात्रिंशतिश्लोकेज्ञेयंतंत्रत्रयंबुधैः पूर्वैस्त्रयोदशैर्मंत्रैः सहाशीति-
रुदाहृता २७ स्तुतासुरैरितिचश्लोकद्वयंचैवपुनर्ऋषिः पुनःसप्तदशश्लोकाऋषिश्लोकत्रयंततः २८ दूतश्चैवनवश्लोकाऋषिरेकों
बिकाततः एकइत्यस्यैकश्लोकइत्यर्थः चतुःश्लोकीपुनर्दूतचतुःश्लोकीपुनःशिवा २९ श्लोकद्वयंमिलित्वातुचत्वारिंशन्नवाधिकम् अशी
त्यापिचसंयोगेएकोनत्रिंशताधिकम् ३० शतमेवंतुविज्ञेयमाहुतीनांचपंचमे विंशतिःश्लोकसंयुक्तेषष्ठेध्यायेप्रकीर्तिताः ३१ सर्वेश्लोका
मंत्ररूपादेव्यैकाथऋषित्रयम् चतुर्विंशतिमंत्राणामित्येवंपरिकीर्तिताः ३२ पंचविंशतिश्लोकयुक्तेध्यायेमंत्रास्तुसप्तमे सर्वेमंत्राःश्लोक
रूपाऋष्युवाचद्वयंततः ३३ सप्तविंशतिरेवंतुमंत्रसंख्याप्रकीर्तिता सार्द्धैकषष्टिश्लोकाढ्येष्टमेध्यायेप्रकीर्तिता ३४ एकषष्टिश्लोकमंत्राअंतेर्द्ध-
श्लोकमंत्रकः आदावेकोऋषिश्चैवत्रिषष्टिर्मंत्रसंततिः ३५ एकोनचत्वारिंशद्भिःश्लोकैर्युक्तेसमीरिताः अध्यायेनवमेमंत्रास्तावंतोथमनुद्वयम् ३६ राजा
ऋषिश्चेतिचैकचत्वारिंशन्मनुस्त्वयं सार्द्धसप्तान्वितेविंशच्छ्लोकैस्तुदशमेन्विते ३७ सप्तविंशतिमंत्रास्तुश्लोकरूपास्ततोंतिमः अर्धश्लोकात्मकोमंत्रोऋष्युवाच

हत्कार्यैर्प्रयोगकर्तारः अल्पेएकः निग्रहेतु सर्वबाधाप्रशमनमित्यस्याग्रेएवमुक्त्वासमुत्पत्स्येतिपठेत् अत्रप्रयोगेक्वचित्तर्पणमप्युक्तम् त्रयोदशपात्रा
णिदुग्धेनापूर्याद्यंतयोः पुष्पांजलिंदत्वाप्रतिश्लोकंप्रथमाध्यायदेवतांतर्पयामीतिप्रयोगेणतर्पयेत् ततस्त्रयोदशस्वग्निषुक्रमात्तत्तदध्यायदेवता
आवाह्यसंपूज्यप्रतिश्लोकमोंप्रथमाध्यायदेवतायैनमः स्वाहेतिमंत्रेणपायसेनजुहुयात् प्रत्यहंयावत्प्रयोगसमाप्तिः त्रयोदशब्राह्मणाः स्ववा-
सिन्यः कुमार्यः एकोनुपनीतोअष्टवर्षएकउपनीतश्चभोजनीयाः परार्थेप्रयोगेतुसत्याः संतुयजमानस्यकामाइतिप्रतिश्लोकंप्रत्यध्यायंवापठे
त् इदंसर्वत्रपरार्थेप्रयोगेतुबोध्यं अत्रत्रयोदशपात्रेषुत्रयोदशदीपाइत्युत्तमःपक्षः एकपात्रेत्रयोदशदीपाइतिमध्यमः एकस्मिन्नेवपा
त्रेत्रयोदशदीपाइतिदेवताचेत्यधमःपक्षः यथोक्तविधिदीपेषुअक्षतपुंजेषुजलपात्रेषुअग्निषुकुमारीषुवाकार्यइत्युपदेशः अथप्रयोगांतरा
णिकात्यायनीतंत्रोक्तानिप्रतिश्लोकमाद्यंतयोः मंत्रंजपेन्मंत्रसिद्धिः सप्रणवमनुलोमव्याहृतित्रयमादौ अंतेतुविलोमंतदित्येवंप्रतिश्लो
कंकृत्वाशताद्वृत्तपाठेतुशीघ्रसिद्धिः प्रतिश्लोकमादौजातवेदसइतिऋचंपठेत् अपमृत्युनिवारणायादावंतेशतंत्र्यंबकमितिमंत्रंजपेत् प्रति
श्लोकंतन्मंत्रजपइतिवा प्रतिश्लोकंशरणागतदीनार्तश्लोकंपठेत्सर्वकार्यसिद्धिः प्रतिश्लोकंकरोतुसानःशुभेत्यर्धंपठेत्सर्वकामाप्तिः स्वाभीष्टवर
प्राप्त्यैएवंदेव्यावरंलब्ध्वेतिश्लोकंप्रतिश्लोकंपठेत् सर्वापन्निवारणार्थंप्रतिश्लोकंदुर्गेतिपठेत् अस्यकेवलस्यापिश्लोकस्यकार्यानुसारेणलक्षम
युतंसहस्रंशतंवाजपः सर्वाबाधेत्यस्यलक्षजपेश्लोकोक्तंफलम् इत्थंयदायदेतिश्लोकस्यजपेमहामारीशांतिः ततोवव्रेनृपोराज्यमितिमंत्रस्य
लक्षजपेपुनःराज्यलाभः हिनस्तिदैत्यतेजांसीत्यनेनसदीपबलिदानेघंटाबधनेचबालग्रहशांतिः आद्यावृत्तिमनुलोमेनत्रयोदशाध्यायंप

ठित्वाततोविपरीतक्रमेणद्वितीयांकृत्वापुनरनुलोमेत्येवमावृत्तिमनुलोमेत्येवंदशाध्यायंपठित्वाततोविपरीतमावृत्तित्रयेउक्तेषुप्रकारेषुशीघ्रंकार्य
सिद्धिः सर्वापत्तिनिवारणायदुर्गेस्मृतेत्यर्धंततोयदंतिकेयच्चदूरे इत्यृचंतदंतेदारिद्र्यदुःखेत्यर्धमेवंकार्यानुसारेणलक्षमयुतंसहस्रंवाजपः कांसोस्मी-
त्यृचंप्रतिश्लोकंपठेल्लक्ष्मीप्राप्तिः मारणार्थमेवमुक्त्वासमुत्पत्तेतिश्लोकंपठेत् मारणोक्तवृत्तिभिः फलसिद्धिः ज्ञानिनामपिचेतांसीतिश्लोकस्तस्य
जपमात्रेणसद्योमोहनमित्यनुभवसिद्धम् प्रतिश्लोकंतच्छ्लोकपाठेत्ववश्यम् रोगानशेषानितिश्लोकस्यप्रतिश्लोकस्यप्रतिश्लोकंपाठेपृथक्जपे
वाविद्याप्राप्तिः भगवत्याकृतंसर्वमित्यादिद्वादशोत्तरशताक्षरोमंत्रः सर्वकामदः सर्वापन्निवारणश्च देविप्रपन्नार्तिहरइतिश्लोकस्ययथाकार्यंल-
क्षायुतसहस्रशतान्यतमेप्रतिश्लोकंपाठेसर्वापन्निवृत्तिःसर्वकामाप्तिश्च एषुप्रयोगेषुप्रतिश्लोकंदीपाग्रेकेवलमेववानमस्कारकरणेशीघ्रंसिद्धिः
प्रतिश्लोकंकामबीजसंपूटितस्यैकचत्वारिंशद्दिनेषुत्रिरावृत्तौसर्वकार्यसिद्धिः एकविंशतिपर्यंतमुक्तरीत्याप्रत्यहंत्रयोदशावृत्तौवशीकरणम् माया
बीजपुटितस्यफट्बीजस्यपल्लवसहितस्यसप्तदशदिनपर्यंतंत्रयोदशावृत्तौउच्चाटणेसिद्धिः तादृशस्यैवदिनचतुष्टयमेकादशावृत्तौसर्वोपद्रवनाशः
एकोनपंचाशद्दिनपर्यंतंप्रतिश्लोकंबीजसंपुटितस्यपंचदशावृत्तौलक्ष्मीप्राप्तिः प्रतिश्लोकमैंबीजसंपुटितस्यशतावृत्त्याविद्याप्राप्तिः ॐ ह्रींनमइत्येत
त्संपुटितः प्रथमचरित्रस्यप्रतिश्लोकंपाठआदावंतेक्रमेणश्लोकांतेविपरीतक्रमेणेत्यर्थः एवमग्रेपि ह्रींनमइत्येतत्संपुटितोमध्यमचरित्रस्यश्लोकं
प्रतिवापाठः ॐ क्लींनमइत्येतत्संपुटितोंत्यचरित्रस्यपाठेशीघ्रंकार्यसिद्धिः तत्रप्रथमचरितेसौःबीजेनषडंगन्यासः त्रिगुणातामसीत्यादिषड्भिः रह
स्योक्तंध्यानम् तत्रप्रथमचरितस्यमार्कंडेयऋषिः अनुष्टुप्छंदः महाकालीदेवता नंदाशक्तिः सौः बीजम् अग्निस्तत्वं इष्टसि॰ मध्यमचरितस्यसुमेधाऋ

षिः अनुष्टुप्छंदः महालक्ष्मीर्देवता शाकंभरीशक्तिः ह्रींबीजंवायुस्तत्वं इष्टसिध्यर्थे॰ ह्रींबीजेनषडंगं सर्वदेवशरीरेइत्यादिसप्तभिः रहस्योक्तं
ध्यानं उत्तमचरितस्यशिवऋषिः अनुष्टुप्जगती महासरस्वतीदेवता भीमाशक्तिः क्लींबीजंसूर्यस्तत्वं काम्यसिध्य॰ क्लीमितिषडंगं गौरीदेहात्स
मुद्भूतमित्यादिरहस्योक्तंध्यानं ऐमितिबीजमाद्यचरितस्येत्यन्यत्र ह्रीमिति आद्येश्रीमितिमध्यमेक्लीमित्यंतेएतान्येवक्रमेणतत्तद्देवतापूजनेइत्य
न्यत्र ऐमित्यंतेइत्यन्यत्र अत्रसर्वकामनाभेदेनध्यानभेदउक्तः वश्येरक्तरंध्यानंपौष्टिकेकर्बुरम् उच्चाटनेधूम्रं मारणेकृष्णं संतानेच्छायांनीलो
त्पलदलश्यामंरत्नाकारंध्यानंसर्वकामदं युद्धकल्पांताग्निसमतयाध्यानं जलभयेपिऋष्युक्तंध्यानं विषादिभयेपीयूषवृष्टिपूतपूर्णचंद्रसदृ
शं॰ एकदिनेसंपूर्णपाठाशक्तौपाठोयंत्रिप्रकारकः एवंक्रमेणसप्तभिर्दिनैरेकावृत्तिः एकैकंचरित्रमेकस्मिन्दिनेइतित्रिभिर्वाकेरलाः एतेषां
मूलानिकात्यायनीतंत्रेद्रष्टव्यानि तंत्रांतरे अस्यसप्तशतीमालामंत्रस्य नारायणऋषिः गायत्रीछंदः श्रीमहिषमर्दिनीरूपादक्षिणामूर्तिर्देवता
क्लींबीजं सोहंशक्तिः दुर्गाप्रीत्यर्थेजपेविनियोगः ॐ यन्मोहोज्ञानिनोरपि अंगुष्ठाभ्यां॰ निद्रांभगवतींविष्णोस्तर्जनीभ्यांस्वाहा ॐ जये
तिदेवाश्चसुदामध्यमाभ्यांवषट् ॐ आजघानभुजेसव्ये अनामिकाभ्यांहुं ॐ हतेतस्मिन्महावीर्ये कनिष्ठिकाभ्यांवौषट् ॐ नीतादिवंरि
पुगणाभयमप्यपास्त करतलकरपृष्ठाभ्यांफडित्युक्तं संपूर्णसप्तशतीस्तोत्रस्य मार्कंडेयोब्रह्मविष्णुशिवात्मकमेधाऋषिः अनुष्टुप्ज
गत्यौछंदसी चंडिकामहाकालीमहालक्ष्मीमहासरस्वतीरूपादेवताः नंदाशाकंभरीभीमाःशक्तयः रक्ताक्षीदुर्गाभ्रामर्यौबीजानि अग्नि
वाय्वर्कास्तत्वानि इष्टार्थेविनियोगः इतिब्रह्मोत्तरखंडनाम्निकविल्लिखितम् अस्यस्तोत्रस्यश्लोकादिडामरतंत्रेप्युक्तम् अधुनादेविवक्ष्या

मिमालामंत्रंनवार्णवम् यस्यस्मरणमात्रेणभुक्तिमुक्तिंलभेन्नरः १ ब्रह्मणात्वेकवारेणश्लोकाःप्रोक्ताश्चतुर्दश समाधिनाम्नाप्रोक्तास्तुश्लो
काश्चाष्टौद्विवारतः २ तथावार्द्धेनसहिताभगवानेकमेकधा त्रिधाप्रोक्ताश्चविबुधैः सार्द्धषट्त्रिंशदेवहि सार्धन्यूनाषट्त्रिंशदित्यर्थः दे
व्याह्वादशधासार्द्धैकोनषष्ठिः प्रकीर्तिताः ऋषिणासप्तविंशत्याचत्वारिंचशतानिवै सार्द्धाष्टोत्तरकाण्यत्रदूतेनोक्ताद्विधाप्रिये श्लोकास्त्रयो
दशैवात्रप्रोक्ताःप्राणप्रियेमम एवंसप्तशतीसंख्याश्लोकाअष्टौचसप्ततिः शतानिपंचदेवेशितेषांसप्तशताहुतिः विष्णुमायादितोभ्रांतिरू
पांतेआहुतित्रयम् चितिरूपेणदेयंतुआहुतीनांत्रयंप्रिये इति एवंहोमाशक्तौजयंतीमंत्रेणैवहोमउक्तोन्यत्रपूजाइतिदिक् अथैतत्स्तोत्रस्य
पाठेडामरकल्पोक्तोनवार्णसंपुटीकरणप्रयोगविधिः तत्रादौतदुद्धारः ऐंबीजमादौंदुसमानदीप्तिंह्रींसूर्यतेजोद्युतिमद्वितीयम् क्लींमूर्तवै
श्वानरतुल्यरूपंतृतीयमानंत्यसुरवायचिंत्यम् १ चांशातकुंभजांबूनदकांतितुर्यंसुपंचमंरक्ततरंप्रकल्प्यम् षडाष्टमुग्रार्तिहरंसलीलंयेसप्तमं
कृष्णतररिपुघ्नं २ विपांडुरंत्वष्टममासिसिद्धंचेन्दूम्रवर्णनवमंविशालम् ऐंह्रींक्लींचामुंडायैविच्चे इतिनवाक्षरोमंत्रः नाभिमात्रेजलेस
हस्रजपात्कविताशक्तिः अयुतजपाद्राजबंधनसंकटादिभ्योमोक्षः अस्मिन्नवाक्षरेमंत्रेमहालक्ष्मीर्व्यवस्थिता तस्मात्सुसिद्धिः सर्वेषां
सर्वदिक्षुप्रदीपकः अतोत्रसिद्धादिविचारोनास्तीतिज्ञापितम् नवाक्षरस्यऋषयोब्रह्मविष्णुमहेश्वराः छंदांस्युक्तानिमुनिभिर्गायत्र्यु
ष्णिगनुष्टुभः देव्यःप्रोक्तामहापूर्वाःकालीलक्ष्मीःसरस्वती नंदाशाकंभरीभीमाःशक्तयश्चमुनिस्मृताः स्याद्रक्तदंतिकादुर्गाभ्रा
मर्याबीजसंचयः अग्निर्वायुर्भगस्तत्त्वंफलंवेदत्रयोद्भवम् भगःसूर्यः सर्वाभीष्टसिद्ध्यर्थंचविनियोगउदाहृतः ऋषिश्छंदो

दैवतानिशिरोमुखहृदिन्यसेत् शक्तिबीजानिस्तनयोस्तत्वानिहृदयेपुनः मंत्राणांपल्लवोवासोमंत्राणांप्रणवःशिरः शिरःपल्लवसंयुक्तोमंत्रःकामदुघोभवेत् नमों
तःशांतिकेपुष्टौप्रणिपातेचकीर्तितः वश्याकर्षणहोमेषुस्वाहांतःसिद्धिदायकः यंत्रभंजनकार्येषुरूघोरभयनाशने वषडंतःप्रकल्प्यस्तुग्रहबाधाविनाशकः उ
च्चाटनेतुसंप्राप्तेमंत्रोफट्पल्लवान्वितः एतेपल्लववामसस्ततत्कर्मणिचंडीपाठेपिश्लोकांतादौयोज्याः तथान्यासहीनोभवेन्मूकोमृतःस्याच्छिरसाविना अप
ल्लवस्तुनग्नःस्यात्सुप्तःस्यादासनंविना गुरुंविनावृथामंत्रःश्रव्यजापस्तुशून्यकः निर्वंभ्योदुष्टदत्तःस्यादन्यबीजस्तुकीलितः दुष्टदत्तःदुष्टापहृतइत्यर्थःदे
वछंदर्षिहीनोयः सतुप्रोक्तोभुजंगमः मूकादयोमंत्रावर्ज्याःवैदिकेमंत्रेनपल्लवादिविचारः ह्रींचंडिकायेइत्यन्ये नास्यमंत्रस्यचषडंगन्यासोनबीजात्मकसम
स्तमंत्रेणचषडंगम् हृदयंनमः शिरसेस्वाहा शिखायैवषट् कवचायहुम् नेत्रत्रयायवौषट् अस्त्रायफडितिक्रमः अस्त्रंसर्वदिक्षुबोध्यम् नवबीजमंत्रास्ते
चंडिकातृप्यतामितिमंत्रेणतर्पणम् एवंहोमादिष्वप्यूह्यम् लिखेदष्टदलंपद्मंकुंकुमागरुचंदनैः पद्ममध्येलिखेच्चक्रंषट्कोणंचंडिकामयम् षट्कोणच
क्रमध्यस्थमाद्यंबीजत्रयंन्यसेत् तत्रमध्यबीजेमहालक्ष्मीः तद्दक्षिणेमहाकाली वामेसरस्वती पूर्वादिषट्कोणेषुबीजान्यन्यानिविन्यसेत् इदंपूजायं
त्रम् पद्मासनाद्यन्यतमंआसनम् तथासप्तशतीश्लोकैर्न्यासः खड्गिनीशूलिनीत्यादिपठित्वाश्लोकपंचकम् आद्यंकृष्णातरंबीजंध्यात्वासर्वांगके
न्यसेत् आद्यमैमिति शूलेनपाहिनोदेवीत्यादिश्लोकचतुष्टयम् पठित्वासूर्यसदृशंद्वितीयंसर्वतोन्यसेत् द्वितीयंह्रीमिति सर्वस्वरूपइत्यादिश्लो
कानांपंचकंपुनः पठित्वास्फटिकाभासंतृतीयंस्वतनौन्यसेत् तृतीयंक्लींमिति उक्तैरेवश्लोकैराद्यन्तिहृद्येनषडंगन्यासोपिक्वचिदुक्तः ततःषडंगंकु-
र्वीतविभक्तैर्मूलवर्णकैः एकेनैकेनवर्णेनचतुर्भिर्युगुलेनच समस्तेनचमंत्रेणकुर्यादंगानिषट्सुधीः ततःक्वचित् एवंन्यासविधिंकृत्वासृष्टिमु

द्रांविलोकयेत् अर्घ्यपात्रंप्रतिष्ठाप्यपूरयेच्छुभवारिणा गंधपुष्पाक्षतांस्तत्रविन्यस्यन्नृपनंदन ध्यात्वामनसिसर्वार्थान्हस्तौदत्वाभिमंत्रयेत् रक्षार्थंतस्यकर्तव्या
चक्रमुद्रास्त्रसंयुता अर्घोदकेनसंस्कारंपूजाद्रव्यस्यपूर्ववत् अथमहाकाल्यादिदेवतात्रयध्यानम् खड्गंचक्रगदेषुचापपरिघान्शूलंभुशुंडींशिरः पा
शान्संदधतींकरैस्त्रिनयनांसर्वांगभूषावृताम् नीलाश्मद्युतिमास्यपाददशकांसेवेमहाकालिकाम् यामस्तौच्छयितेहरौकमलजोहंतुंमधुंकैटभम्
१ अक्षस्त्रक्परशूगदेषुकुलिशंपद्मंधनुःकुंडिकांदंडंशक्तिमसिंचचर्मजलजंघंटांसुराभाजनम् शूलंपाशसुदर्शनेचदधतींहस्तैःप्रवालप्रभांसेवे
सैरिभमर्दिनीमिहमहालक्ष्मींसरोजस्थिताम् २ घंटांशूलहलानिशंखमुसलेचक्रंधनुःसायकंहस्ताब्जैर्दधतींघनांतविलसच्छीतांशुतुल्यप्रभाम्
गौरीदेहसमुद्भवांत्रिजगतामाधारभूतांमहापूर्वामत्रसरस्वतीमनुभजेच्छुंभादिदैत्यार्दिनीम् ३ ततःउक्तयंत्रेपंचोपचारैःपूज्याः एवंकृत्वाजपेल्लक्षचतुष्कं
तद्दशांशतः पायसान्नेनजुहुयात्पूजितेहेमरेतसि एतदेवास्यपुरश्चरणम् मार्कंडेयपुराणोक्तंनित्यंचंडीस्तवंपठेत् पुटितंमूलमंत्रस्यजपेदाप्नोतिवांछित
म् शतमादौशतंचांतेजपेन्मंत्रंनवार्णकम् चंडीसप्तशतीमध्येसंपुटोयमुदाहृतः सकामैःसंपुटोजाप्योनिष्कामैःसंपुटंक्वचित् सप्तशत्याश्चरित्रेतुप्रथमेपद्म
भूर्मुनिः छंदोगायत्रमुदितंमहाकालीतुदेवता वाग्बीजंपावकस्तत्वंधर्मार्थेविनियोजनम् मध्यमेतुचरित्रेत्रमुनिर्विष्णुरुदाहृतः उष्णिक्छंदोमहालक्ष्मी
र्दैवताबीजमद्रिजा वायुस्तत्वंधनप्राप्त्यैविनियोगउदाहृतः उत्तरस्यचरित्रस्यऋषिःशंकरईरितः त्रिष्टुप्छंदोदेवतास्यमहापूर्वासरस्वती कामोबी
जंरविस्तत्वंकामाप्त्यैविनियोजनम् क्वचित्तुसंपूर्णस्तोत्रस्यमार्कंडेयऋषिः ब्रह्मविष्णुरुद्रावाऋषयः महाकाल्यादयस्तिस्रोदेवताः गायत्र्युष्णिगनुष्टु
प्छंदांसि ऐंह्रींक्लींबीजानि चामुंडाशक्तिः अग्निवायुसूर्यास्तत्वानि सर्वेष्टसिद्ध्यर्थेजपेविनियोगइत्युक्तम् एवंसंस्मृत्यऋष्यादीन्ध्यात्वाशर्वोक्तमार्गतः सा

र्थंस्मृत्वापठेच्चंडींस्तवंस्पष्टपदाक्षरम् समाप्तौतुमहालक्ष्मींदेवींध्यात्वाषडंगकम् जपेदष्टशतंमूलंदेवतायैनिवेदयेत् आदावंतेअष्टशतंजपः आश्विनस्यसि
तेपक्षेआरभ्याग्नितिथिंसुधीः अष्टम्यंतंजपेल्लक्षंदशांशंहोममाचरेदिति अथशतचंडीविधिः शंकरस्यभवान्यावाप्रासादनिकटेशुभम् मंडपंद्वार
वेद्याढ्यंकुर्यात्सध्वजतोरणम् तत्रकुंडंप्रकुर्वीतप्रतीच्यांमध्यतोपिवा स्नात्वानित्यक्रियांकृत्वावृणुयाद्दशवाडवान् जितेंद्रियान्सदाचारान्कुलीनान्सत्य
वादिनः वाडवाः ब्राह्मणाः पंचभिःसप्तभिर्वापिनवैकादशभिस्तथा अदीर्घदिवसैःक्षिप्रंविदध्याच्चंडिकामखम् अयुग्मब्राह्मणैःकार्यंशतावृत्तंसुसि
द्धये त्रिपंचसप्तनवभिर्दिनैःपक्षेणवापुनः देवीमाहात्म्यपाठंतुयुग्मैर्विप्रैःकृतंतुतत् निष्फलंचभवेत्सर्वभूतिनाशमवाप्नुयात् इतिवचनत्रयंक्रोड
तंत्रनाम्नापठ्यतेतत्तुनिर्मूलम् अष्टमीनवमीचतुर्दशीपूर्णिमासुयथाशतावृत्तिसमाप्तिर्भवतितथा आरंभःकर्तव्यः इतिसांप्रदायिकाः श्रुतसन्नान्
चंडिकापाठरतान्लज्जादयावतः मधुपर्कविधानेनस्वर्णवस्त्रादिदानतः जपार्थमासनंमालांदद्यात्तेभ्योपिभोजनम् तेहविष्यान्नमश्नंतोमंत्रार्थग
तमानसाः भूमौशयानाःप्रत्येकंजपेयुश्चंडिकास्तवम् मार्कंडेयपुराणोक्तंदशकृत्वःसचेतसः नवार्णंचंडिकामंत्रंजपेयुश्चायुतंपृथक् पृथक्संपुटीक
रणजपादितिशेषः प्रत्येकंब्राह्मणैः अयुतजपःकार्यः जपमानःपूजयेच्चकन्यानांदशकंशुभम् द्विवर्षाद्याद्दशाब्दांताःकुमारीःपरिपूजयेत् एकाब्दा-
याःप्रीत्यभावोरुद्राब्दातुविवर्जिता तासांक्रमेणनामानि कुमारी १ त्रिमूर्तिः २ कल्याणी ३ रोहिणी ४ कालिका ५ चंडिका ६ शांभवी ७ दुर्गा ८ सुभद्रा ९
एतैरेवनाममंत्रैस्तासांपूजा तत्रहीनाधिकांगीव्रणयुक्ताअंधकाकाणाकुरूपाकेकररोमयुक्देहादासिजारोगिणयः इत्येवमाद्यावर्ज्याः विप्रांसर्वेष्टसंसिद्ध्यैय
शसेक्षत्रियोद्भवाम् वैश्यजांधनलाभायपुत्रास्यैशूद्रजांयजेत्इति गंधपुष्पधूपदीपभक्ष्यभोज्यैर्यथाशक्तिवस्त्राभरणैश्चपूजिता वेद्यांविरचितेर-

ध्येसर्वतोभद्रमंडले घटंसंस्थाप्यविधिवत्तत्रावाह्यार्चयेच्छिवाम् तदग्रेकन्यकाश्चापिपूजयेद्ब्राह्मणानपि उपचारैस्तुविविधैर्नवार्णावरणैरपि ततः
ॐकारःप्रथमंपीठंपूर्णपीठमतःपरम् तृतीयंकामपीठंचपूजयेत्संप्रदायतः आग्नेयादिचतुर्दिक्षुपूज्यंदेवीचतुष्टयम् जयाचविजयाचैवजयंतीचाप
राजिता पूर्वोक्तयंत्रेपूर्वकोणेसरस्वतीब्रह्मा श्रीसहितोविष्णुर्नैर्ऋत्ये उमयाशिवोवायव्ये षट्कोणचक्रमध्यस्थमध्यबीजेमहालक्ष्मीः महा
कालीमहासरस्वती तद्दक्षिणवामयोः उदक्सिंहोदक्षिणेमहिषः षट्कोणेषुनंदजारक्तदंतिकाशाकंभरीदुर्गाभीमाभ्रामर्यः सबिंदुनामाद्यव
र्णाद्यास्ताराद्याश्चासांनाममंत्राः पूजादौताराःप्रणवः अष्टपत्रेषुब्रह्माणीमाहेश्वरीवैष्णवीवाराहीनारसिंहीऐंद्रीचामुंडाउक्तारीत्यानाममंत्रैः पूज्याः
ततोविष्णुमायादिचित्यंतास्त्रयोविंशतिदेवताः प्राणादिक्रमेणकेसरेषुपूज्याः ततोविष्णुमायाद्याः क्वचित्तुएवम् विष्णुमाया १ चेतना २ निद्रा
३ क्षुधा ४ छाया ५ शक्तिः ६ तृष्णा ७ क्षांतिः ८ जातिः ९ लज्जा १० शांतिः ११ श्रद्धा १२ कांतिः १३ लक्ष्मीः १४ धृतिः १५ वृत्तिः १६ स्मृतिः १७ दया १८
तुष्टिः १९ पुष्टिः २० माता २१ भ्रांतिः २२ तद्रूपास्त्रयोविंशोक्ताः तालमूलेचसंपूज्यमाधारादिचतुष्टयम् आधारःकर्मशेषौच तुर्थीपृथिवीनृप
ग्रहकोणेषुगणेशः क्षेत्रपालोबटुकोयोगिन्यः इंद्राद्याश्चेति एवंचतुर्दिनंकृत्वापंचमेहोममाचरेत् तत्रप्रथमेन्हिएकावृत्तिः द्वितीयेद्वे तृतीयेतिस्रः चतु
र्थेचतुरः प्रतिब्राह्मणहोमद्रव्याणिपायसान्नैस्त्रिमधुक्तैर्द्राक्षारंभाफलादिभिः मातुलिंगैरिक्षुदंडैर्नालिकेरैःपुरःस्थितैः जातीफलैराम्रफलैरन्यैर्म
धुरवस्तुभिरिति सप्तशत्यादशावृत्त्याप्रतिमंत्रंहुतंचरेत् अयुतंचनवार्णेनस्थापितेग्नौविधानतः कृत्वावरणदेवानांहोमंतन्नाममंत्रतः कृत्वापू-
र्णाहुतिंसम्यक्देवताग्नीविसृज्यच अभिषिंचेच्चयष्टारंविप्रौघःकलशोदकैः निष्कंसुवर्णमथवाप्रत्येकंदक्षिणांदिशेत् भोजयेच्चशतंविप्राभ

क्ष्यभोज्यैः पृथग्विधैः तेभ्योपिदक्षिणांदत्वागृण्हीयादाशिषस्ततः एवंकृतेजगद्वश्यंसर्वेनश्यंत्युपद्रवाइति कुर्यादेवंविशःकृत्वात्माचंडीसाह
स्त्रकेविधिं विद्यावतःसदाचारान्ब्राह्मणान्वृणुयाच्छतं प्रत्येकंचंडिकापाठान्विदध्युस्तेदिशामतात् अयुतंप्रजपेयुस्तेप्रत्येकंनववर्णकम्
पूर्वोक्ताःकन्यकाःपूज्याःपूर्वमंत्रैःशतंशुभाः वेदाहमेवंसंपाद्यहोमंकुर्युःप्रयत्नतः सप्तशत्याशतावृत्याप्रतिमंत्रविधानतः लक्षसंख्यंनवा
र्णेनपूर्वोक्तैर्द्रव्यसंचयैः होतृभ्योदक्षिणांदत्वापूर्वोक्तान्भोजयेद्विजान् सहस्रसंमितान्साधून्देव्याराधनतत्परान् एवंसहस्रसंख्याके
कृतेचंडीविधौनृणाम् सिध्यत्यभीप्सितंसर्वंदुःखौघश्वविनश्यति मारीदुर्भिक्षरोगाद्यानश्यंतिव्यसनोच्चयाः एतद्दशगुणोविधिरयु
तंप्रजपेयुस्तेइति यस्याःप्रभावमतुलंश्लोकमुक्ताकृतांजलिः दद्याद्गोमिथुनान्यष्टावाचार्यायकृभक्तिमान् चतुर्विंशतिसंख्याकैर्हेम
गद्याणकैःसह एकैकंदशविप्रेभ्योदद्याद्गोमिथुनंसमम् निष्कत्रयसमायुक्तंवस्त्रालंकारभूषितमिति यद्यत्कार्यसमुद्दिश्यक्रियते-
शतचंडिका तत्तत्तस्यमहालक्ष्मीःसत्यमाशुप्रयच्छति क्वचिद्रुद्रयामलइत्युक्त्वाद्रव्यांतराण्यपिहोमेउक्तानि तत्रप्रधानहोमः स्यात्त्रिम
धूद्भूतउत्तमः प्रधानद्रव्यमुद्दिष्टंपायसान्नंतिलांस्तथा यवैर्वाश्रीफलैर्दिव्यैर्नानाविधफलैस्तथा किंशुकैःसर्षपत्वग्भिर्दर्भैर्दूर्वांकुरै
स्तथा करवीरैरक्तपुष्पैरक्तोत्पलसितैरपि रक्तचंदनखंडैश्चगुग्गुलैश्चमनोहरैरिति अथब्रह्मांडपुराणनाम्नाप्रत्यध्यायंश्लोकसंख्या
क्वचिदुक्ता तत्राद्यचरिताध्यायेश्लोकैकाशीतिरुत्तमा अथमध्यमचरित्रेतुअष्टस्वेवकृसंख्यावा त्रयोमध्यमायाश्चतुःसप्तचतुर्वे
दरववेदकाः अथोत्तमचरित्रेतुषट्षडग्निश्लोकभागितेति अग्नीषोमाध्यायवतीगीतासप्तशतीस्मृता तथाकवचार्गलाकील

कोनामापिश्लोकसंख्याउक्ताः श्रीवज्रकवचस्यापित्रिपंचाशच्छ्लोकशालिता अर्गलाकीलकेश्लोकाव्यष्टाविंशतिसंख्यकाः अथोरहस्यत्रयस्यत्रयो ध्यायामयुध्रुवाइतिच तत्रकवचस्यचामुंडादेवता ब्रह्माऋषिः अनुष्टुप्छंदः अंगन्यस्तादेव्यः सायुधामातरोबीजम् दिग्बंधदेवतास्तत्त्वं अर्गला याः विष्णुरनुष्टुप्छंदः नवार्णवोमंत्रः शक्तिः मंत्रोदितादेव्योबीजम् सप्तशतीमंत्रस्तत्त्वं कवचस्यशिवऋषिः इतरदर्गलावत् तथाप्रथमचरित्रस्य ब्रह्माऋषिः अनुष्टुप्छंदः महाकालीदेवता नंदजाशक्तिः रक्तदंतिकाबीजम् अग्निस्तत्त्वंपौष्टिकेविनियोगः मध्यमचरित्रस्य विष्णुऋषिः महालक्ष्मी देवता शाकंभरीशक्तिः दुर्गाबीजं उष्णिकृछंदः वायुस्तत्त्वं ईप्सितप्राप्त्यर्थेजपेविनियोगः उत्तमचरित्रस्यशिवऋषिः महासरस्वतीदेवता छंदोनुष्टु प्जगत्यौ भीमाशक्तिः भ्रामरीबीजं सूर्यस्तत्त्वं उच्चाटनादौविशेषतोविनियोगइति तत्तुकात्यायनीतंत्रोक्तमंत्रविभागेनविरोधात्निर्मूलइतिध्येय म् इतिश्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतेमार्कंडेयपुराणांतर्गतसप्तशत्याख्यचंडीस्तोत्रस्यव्याख्यानेचंडीस्तो त्रप्रयोगविधिः समाप्तः शुभंभवतु श्रीर्जयतु ७ ॥ ॥७॥ ॥ ७ ॥ ॥७॥ ॥ ७ ॥ ७ ॥

अथदेव्यपराधस्तोत्रप्रारंभः नमंत्रंनोयंत्रंतदपिचनजानेस्तुतिमहोनचाह्वानंध्यानंतदपिचनजानेस्तुतिकथाः नजानेमुद्रास्तेतदपिचनजानेवि लपनंपरंजानेमातस्त्वदनुसरणंकष्टहरणम् १ विधेरज्ञानेनद्रविणविरहेणालसतयाविधेयाशक्यत्वात्तवचरणयोर्याच्युतिरभूत् तदेतत्क्षंतं व्यंजननिसकलोद्धारिणिशिवेकुपुत्रोजायेतक्वचिदपिकुमातानभवति २ जगन्मातर्मातस्तवचरणसेवानरचितानवादत्तंदेविद्रविणमपिभूयस्तवमया

तथापित्वंस्नेहंमयिनिरुपमंयत्प्रकुरुषेकुपुत्रोजा॰ ३ पृथिव्यांपुत्रास्तेजननिबहवःसंतिसरलाःपरंतेषांमध्येविरलतरलोहंतवसुतः मदीयोयंत्यागःस
मुचितमिदंनोतवशिवेकुपुत्रोजायेतक्वचिदपिकुमातानभवति ४ परित्यक्तादेवान्विविधविधिसेवाकुलतयामयापंचाशीतेरधिकमुपनीतेतुवयसि
इदानींचेन्मातस्तवयदिकृपानापिभवितानिरालंबोलंबोदरजननिकंयामिशरणम् ५ श्वपाकोजल्पाकोभवतिमधुपाकोपमगिरांनिरातंकोरंकोविह
रतिचिरंकोटिकनकैः तवापर्णेकर्णेविशतिमनुवर्णेफलमिदंजनःकोजानीतेजननिजपनीयंजपविधौ ६ चिताभस्मालेपोगरलमशनंदिक्पटध-
रोजटाधारीकंठेभुजगपतिहारीपशुपतिः कपालीभूतेशोभजतिजगदीशैकपदवींभवानित्वत्पाणिग्रहणपरिपाटीफलमिदं ७ नमोक्षस्याकां-
क्षाभवविभववांछापिचनमेनविज्ञानापेक्षाशशिमुखिसुखेच्छापिनपुनः अतस्त्वांसंयाचेजननिजननंयातुममवैमृडानीरुद्राणीशिवशिवभवा
नीतिजपतः ८ नाराधितासिविधिनाविविधोपचारैःकिंरुक्षचिंतनपरैर्नकृतंवचोभिः श्यामेत्वमेवयदिकिंचनमय्यनाथेधत्सेकृपामुचितमंब
परंतवैव ९ आपत्सुमग्नःस्मरणंत्वदीयंकरोमिदुर्गेकरुणार्णवेशि नैतच्छठत्वंममभावयत्त्वंक्षुधातृषार्ताजननींस्मरंति १० जगदंबविचि
त्रमत्रकिंपरिपूर्णाकरुणास्तिचेन्मयि अपराधपरंपरावृतंनहिमातासमुपेक्षतेसुतम् ११ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरा-
चार्यविरचितंदेव्यपराधस्तोत्रंसंपूर्णम् ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ

हें पुस्तक मुंबईंत महादेव गोपाळ शास्त्री अमरापुरकर याणीं आपले ज्ञानदर्पण छापखान्यांत छापिलें· शके १७९७ युवनामसंवत्सरे· मार्गशीर्षकृष्णासप्तम्यांरवौ· तारीख १९ डिसेंबर सन् १८७५

॥ इति शान्तनवीटीकासमेता दुर्गासप्तशती समाप्ता ॥

अत्र च सटीकांगषट्कं सभाष्यं देवीसूक्तं रात्रिसूक्तं च निवेशितमस्माभिः ।

